रामभयाद्राजा वनं प्राप सुदुःखितः ॥ १३ ॥ दधत् स नारीकवचं तस्माच्छतरथोऽभवत् ॥ तस्माद्विलिबिलिः श्रीमान् वृद्धशर्म्मा च तत्सुतः ॥ १४ ॥ तस्माद्वि श्वसहस्तस्मात्खट्वाङ्ग इति विश्रुतः ॥ दीर्घबाहुः सुतस्तस्माद्रघुस्तस्मादजायत ॥१५॥ रघोरजः समुत्पन्नो राजा दशरथस्ततः ॥ रामो दाशरथिर्वीरो धर्म्मज्ञो लोकविश्रुतः ॥१६॥ भरतो लक्ष्मणश्चैव शत्रुघ्नश्च महाबलः ॥ सर्व्वे शक्रसमा युद्धे विष्णुशक्तिसमन्विताः ॥ १७ ॥ जज्ञे रावणनाशार्थं विष्णुरंशेन विश्वभुक् ॥ रामस्य भार्य्या सुभगा जनकस्यात्मजा शुभा ॥ १८ ॥ सीता त्रिलोकविख्याता शीलौदार्य्यगुणान्विता ॥ तपसा तोषिता देवी जनकेन गिरीन्द्रजा ॥ १९ ॥ प्रायच्छज्जानकीं सीतां राममेवाश्रितां पतिम् ॥ प्रीतश्च भगवानीशस्त्रिशूली नीललोहितः ॥२०॥ प्रददौ शत्रुनाशार्थं जनकायाद्भुतं धनुः ॥ स राजा जनको धीमान् दातुकामः सुतामिमाम् ॥ २१ ॥ अघोषयदमित्रघ्नो लोकेऽस्मिन्द्विजपुङ्गवाः ॥ इदं धनुः समादातुं यः शक्नोति जगत्त्रये ॥ २२ ॥ देवो वा दानवो वापि स सीतां लब्धुमर्हति ॥ विज्ञाय रामो बलवाञ्जनकस्य गृहं प्रभुः ॥ २३ ॥ भञ्जयामास चादाय गत्वासौ लीलयैव हि ॥ उद्ववाहाथ तां कन्यां पार्व्वतीमिव शङ्करः ॥ २४ ॥ रामः परमधर्म्मात्मा सेनामिव च षण्मुखः ॥ ततो बहुतिथे काले राजा दशरथः स्वयम् ॥ २५ ॥ रामं ज्येष्ठसुतं वीरं राजानं कर्त्तुमारभत् ॥ तस्याथ पत्नी सुभगा कैकेयी चारुहासिनी ॥ २६ ॥ निवारयामास पतिं प्राह सम्भ्रान्तमानसा ॥ मत्सुतं भरतं वीरं राजानं कर्त्तुमर्हसि ॥ २७ ॥ पूर्व्वमेव वरौ यस्माद्दत्तौ मे भवता यतः ॥ स तस्या वचनं श्रुत्वा राजा दुःखितमानसः ॥ २८ ॥ बाढमित्यब्रवीद्वाक्यं तथा रामोऽपि धर्म्मवित् ॥ प्रणम्याथ पितुः पादौ लक्ष्मणेन सहाच्युतः ॥ २९ ॥ ययौ वनं सपत्नीकः कृत्वा समयमात्मवान् ॥ संवत्सराणां चत्वारि दश चैव महाबलः ॥ ३० ॥ उवास तत्र भगवान् लक्ष्मणेन सह प्रभुः ॥ कदाचिद्वसतोऽरण्ये रावणो नाम राक्षसः ॥ ३१ ॥ परिव्राजकवेषेण सीतां हृत्वा ययौ पुरीम् ॥ अदृष्ट्वा लक्ष्मणो रामः सीतामाकुलितेन्द्रियौ ॥ ३२ ॥ दुःखशोकाभिसन्तप्तौ बभूवतुररिन्दमौ ॥ ततः कदाचित्कापिना सुग्रीवेण द्विजोत्तमाः ॥ ३३ ॥ वानराणामभूत्सख्यं रामस्याक्लिष्टकर्म्मणः ॥ सुग्रीवस्यानुगो वीरो हनूमान्नाम वानरः ॥ ३४ ॥ वायुपुत्रो महातेजा रामस्यासीत्प्रियः सदा ॥ स कृत्वा परमं धैर्य्यं रामाय

१ कामभयादिति पा० । २ बिभ्रादिति पा० । ३ दिलिविल इति पा० । ४ तस्मादिलिविलिः श्रीमान् वृद्धधर्म्मा च तत्सुत इति पा० । ५ वट्वाङ्ग इति, वेटुङ्ग इति, वट्वङ्ग इति पा० । ६ विश्वहदिति पा० । ७ सीतेति लोकविख्याता इति पा० । ८ विद्वानिति पा० । ९ उद्वाह इति तु वक्तव्ये उद्ववाह इत्यार्षम् । १० कर्त्तुमारभदित्यत्र परस्मैपदमार्षम् । ११ चारुभाषिणीति पा० । १२ भवता च यदिति पा० । १३ मतिमानिति पा० ।

कृतनिश्चयः ॥३५॥ आनयिष्यामि तां सीतामित्युक्त्वा विचचार ह ॥ महीं सागरपर्य्यन्तां सीतादर्शनतत्परः ॥३६॥ जगाम रावणपुरीं लङ्कां साग रसंस्थिताम् ॥ तत्राथ निर्ज्जने देशे वृक्षमूले शुचिस्मिताम् ॥३७॥ अपश्यदमलां सीतां राक्षसीभिः समावृताम् ॥ अश्रुपूर्णेक्षणां हृद्यां संस्मरन्तीमनि न्दिताम्॥३८॥राममिन्दीवरश्यमं लक्ष्मणश्चात्मसंस्थिताम्॥ निवेदयित्वा चात्मानं सीतायै रहसि प्रभुः॥३९॥ असंशयाय प्रददावस्यै रामाङ्गुलीयक म्॥दृष्ट्वांगुलीयकं सीता पत्युः परमशोभनम् ॥४०॥ मेने समागतं रामं प्रीतिविस्फुरितेक्षणा॥समाश्वास्य तदा सीतां दृष्ट्वा रामस्य चान्तिकम्॥४१॥ नयिष्ये त्वां महाबाहुमुक्त्वा रामं ययौ पुनः ॥ निवेदयित्वा रामाय सीतादर्शनमात्मवान् ॥ ४२ ॥ तस्थौ रामेण पुरतो लक्ष्मणेन च पूजितः ॥ ततः स रामो बलवान्सार्द्धं हनुमता स्वयम् ॥ ४३ ॥ लक्ष्मणेन च युद्धाय बुद्धिं चक्रे हि रक्षसः ॥ कृत्वाथ वानरशतैर्लंकामार्गं महोदधेः ॥ ४४ ॥ सेतुम्परमधर्मात्मा रावणं हतवान्प्रभुः ॥ सपत्नीकं हि ससुतं सभ्रातृकमरिन्दमः ॥ ४५ ॥ आनयामास तां सीतां वायुपुत्रसहायवान् ॥ सेतुमध्ये महादेवमीशानङ्कृत्तिवाससम् ॥ ४६ ॥ स्थापयामास लिङ्गस्थं पूजयामास राघवः ॥ तस्य देवो महादेवः पार्वत्या सह शंकरः ॥ ४७ ॥ प्रत्यक्षमेव भगवान्दत्तवान्वरमुत्तमम् ॥ यत्त्वया स्थापितं लिङ्गं द्रक्ष्यन्तीदं द्विजातयः ॥ ४८ ॥ महापातकसंयुक्तास्तेषां पापं विनंक्ष्यति ॥ अन्या नि चैव पापानि स्नातस्यात्र महोदधौ ॥ ४९ ॥ दर्शनादेव लिङ्गस्य नाशं यान्ति न संशयः ॥ यावत्स्थास्यन्ति गिरयो यावदेषा च मेदिनी ॥ ॥ ५० ॥ यावत्सेतुश्च तावच्च स्थास्याम्यत्र तिरोहितः ॥ स्नानं दानं तपः श्राद्धं सर्वम्भवतु चाक्षयम् ॥ ५१ ॥ स्मरणादेव लिङ्गस्य दिनपापम्प्रण श्यति ॥ इत्युक्त्वा भगवाञ्छम्भुः परिष्वज्य तु राघवम् ॥ ५२ ॥ सनन्दी सगणो रुद्रस्तत्रैवान्तरधीयत ॥ रामोऽपि पालयामास राज्यन्धर्मपरा यणः ॥ ५३ ॥ अभिषिक्तो महातेजा भरतेन महाबलः ॥ विशेषाद्ब्राह्मणान्सर्वान्पूजयमास चेश्वरम् ॥ ५४ ॥ यज्ञेन यज्ञहन्तारमश्वमेधेन शङ्करम्॥ रामस्य तनयो जज्ञे कुश इत्यभिविश्रुतः ॥ ५५ ॥ लवश्च सुमहाभागः सर्वतत्त्वार्थवित्सुधीः ॥ अतिथिस्तु कुशाज्जज्ञे निषधस्तत्सुतोऽभवत् ॥५६॥ नलश्च निषधस्यासीत् नभास्तस्मादजायत ॥ नभसः पुण्डरीकाक्षः क्षेमधन्वा तु तत्सुतः ॥ ५७ ॥ तस्य पुत्रोऽभवद्वीरो देवानीकः प्रतापवान् ॥

---

१ निवेदयित्वा इत्यार्षं, निवेद्य इति साधु । २ स्वयमिति पा० । ३ चक्रेतिराक्षसमिति पा० । ४ सपत्नीकश्चेति पा० । ५ लिङ्गश्चेति पा० । ४ तत्र इति पा० । ७ स्थास्यन्त्यत्र तिरोहिता इति पा० । ८ भविष्यत्यक्षयम्महदिति पा० । ९ नाशं यान्ति न संशय इति पा० । १० नलस्तु निषधस्याभूदिति पा० ।

अहीनगुस्तस्य सुतो महस्वांस्तत्सुतोऽभवत् ॥ ५८ ॥ तस्माच्चन्द्रावलोकस्तु ताराधीशश्च तत्सुतः ॥ ताराधीशाच्चन्द्रगिरिर्भानुवित्तस्ततोऽभवत् ॥ ॥ ५९ ॥ श्रुतायुरभवत्तस्मादेते चेक्ष्वाकुवंशजाः ॥ सर्वे प्राधान्यतः प्रोक्ताः समासेन द्विजोत्तमाः ॥ ६० ॥ य इमं शृणुयान्नित्यमिक्ष्वाकोर्वंशमुत्तमम् ॥ सर्वपापविनिर्मुक्तो देवलोके महीयते ॥ ६१ ॥ इति श्रीकूर्म्मपुराणे इक्ष्वाकुवंशवर्णनं नाम एकविंशोऽध्यायः ॥ २१ ॥ सूत उवाच ॥ ऐलः पूरूरवाश्चाथ राजा राज्यमपालयत् ॥ तस्य पुत्रा बभूवुर्हि षडिन्द्रसमतेजसः ॥ १ ॥ आयुर्मायुरमायुश्च विश्वायुश्चैव वीर्यवान् ॥ शतायुश्च श्रुतायुश्च दिव्याश्चैवोर्वशीसुताः ॥ २ ॥ आयुषस्तनया वीराः पञ्चैवासन्महौजसः ॥ स्वर्भानुतनयायां वै प्रभायामिति नः श्रुतम् ॥ ३ ॥ नहुषः प्रथमस्तेषां धर्म्मज्ञो लोकविश्रुतः ॥ नहुषस्य तु दायादाः पञ्चेन्द्रोपमतेजसः ॥ ४ ॥ उत्पन्नाः पितृकन्यायां विरजायां महाबलाः ॥ यातिर्ययातिः संयातिरायातिः पञ्चमोऽश्वकः ॥ ५ ॥ तेषां ययातिः पञ्चानां महाबलपराक्रमः ॥ देवयानीमुशनसः सुतां भार्य्यामवाप सः ॥ ६ ॥ शर्मिष्ठामासुरीञ्चैव तनयां वृषपर्वणः ॥ यदुश्च तुर्वसुश्चैव देवयानी व्यजायत ॥ ७ ॥ द्रुह्युश्चानुश्च पूरुश्च शर्म्मिष्ठा चाप्यजीजनत् ॥ सोऽभ्यषिञ्चदतिक्रम्य ज्येष्ठं यदुमनिन्दितम् ॥ ८ ॥ पुरुमेव कनीयांसम्पितुर्वचनपालकम् ॥ दिशि दक्षिणपूर्वस्यान्तुर्वसुं पुत्रमादिशत् ॥ ९॥ दक्षिणापरयो राजा यदुं श्रेष्ठं न्ययोजयत् ॥ प्रतीच्यामुत्तरायाञ्च द्रुह्युञ्चानुमकल्पयत् ॥ १० ॥ तैरियं पृथिवी सर्व्वा धर्म्मतः परिपालिता ॥ राजापि दारसहितो वनं प्राप महायशाः ॥ ११ ॥ यदोरप्यभवन् पुत्राः पञ्च देवसुतोपमाः ॥ सहस्रजित्तथा श्रेष्ठः क्रोष्टुर्नीलो जिनो रघुः ॥ १२ ॥ सहस्रजित्सुतस्तद्वच्छतजिन्नाम पार्थिवः ॥ सुताः शतजितोऽप्यासंस्त्रयः परमधार्म्मिकाः ॥ १३ ॥ हैहयश्च हयश्चैव राजा वेणुहयश्च यः ॥ हैहयस्याभवत्पुत्रो धर्म्म इत्यभिविश्रुतः ॥१४॥ तस्य पुत्रोऽभवाद्विप्रा धर्म्मनेत्रः प्रतापवान् ॥ धर्म्मनेत्रस्य कीर्त्तिस्तु सञ्जितस्तत्सुतोऽभवत् ॥१५॥ महिष्मः सञ्जितस्याभूद्भद्रश्रेण्यस्तदन्वयः ॥ भद्रश्रेण्यस्य दायादो दुर्द्दमो नाम पार्थिवः ॥ १६ ॥ दुर्द्दमस्य सुतो धीमानन्धको नाम वीर्य्यवान् ॥ अन्धकस्य तु दायादाश्चत्वारो लोकसम्मताः ॥ १७ ॥ कृतवीर्य्यः कृताग्निश्च कृतवर्म्मा च तत्सुतः ॥ कृतौजाश्च चतुर्थोऽभूत्कार्त्तवीर्य्यस्तथार्जुनः ॥ १८ ॥

१ सहस्त इति, सहस्वानिति पा॰ । २ सहस्रांशुः सुतोभवदिति पा॰ । ३ तारापीडस्तु इति पा॰ । ४ रोमहर्षण उवाचेति पा॰ । ५ षडिन्द्रोपमतेजस इति पा॰ । ६ पञ्चासन्नमितौजस इति, षडिन्द्रोपमतेजस इति पा॰ । ७ यतिरिति पा॰ । ८ अत्र अन्तर्भूतण्यन्तत्वादजनयदित्येवार्थः । ९ दक्षिणापरयोः—दक्षिणस्यामपरस्याञ्च दिशि इत्यर्थः । १० संज्ञित इति पा॰ । ११ महिष्मानिति पा॰। १२ तथैव च इति पा॰ । १३ कार्त्तवीर्य्योर्जुनोऽभवदिति पा॰ ।

सहस्रबाहुर्द्युतिमान्धनुर्वेदविदां वरः ॥ तस्य रामोऽभवन्मृत्युर्ज्जामदग्न्यो जनार्द्दनः ॥ १९ ॥ तस्य पुत्रशतान्यासन्पञ्च तत्र महारथाः ॥ कृतास्त्रा बलिनः शूराः धर्म्मात्मानो मनस्विनः ॥ २० ॥ शूरश्च शूरसेनश्च कृष्णो धृष्णस्तथैव च ॥ जयध्वजश्च बलवान्नारायणपरो नृपः ॥ २१ ॥ शूरसेनादयः पूर्वे चत्वारः प्रथितौजसः ॥ रुद्रभक्ता महात्मानः पूजयन्ति स्म शङ्करम् ॥ २२ ॥ जयध्वजस्तु मतिमान्देवं नारायणं हरिम् ॥ जगाम शरणं विष्णुं दैवतन्धर्म्मतत्परः ॥ २३ ॥ तमूचुरितरे पुत्रा नायं धर्म्मस्तवानघ ॥ ईश्वराराधनरतः पितास्माकमिति श्रुतिः ॥ २४ ॥ तानब्रवीन्महातेजा ह्येष धर्मः परो मम ॥ विष्णोरंशेन सम्भूता राजानो ये महीतले. ॥ २५ ॥ राज्यं पालयितावश्यम्भगवान्पुरुषोत्तमः ॥ पूजनीयोऽजितो विष्णुः पालको जगतां हरिः ॥ २६ ॥ सात्त्विकी राजसी चैव तामसी च स्वयं प्रभुः ॥ तिस्रस्तु मूर्त्तयः प्रोक्ताः सृष्टिस्थित्यन्तहेतवः॥२७॥ सत्त्वात्मा भगवान्विष्णुः संस्थापयति सर्व्वदा ॥ सृजेद्ब्रह्मा रजोमूर्त्तिः संहरेत्तामसी हरः ॥ २८ ॥ तस्मान्महीपतीनान्तु राज्यम्पालयतामिदम् ॥ आराध्यो भगवान्विष्णुः केशवः केशिमर्द्दनः॥२९॥निशम्य तस्य वचनं भ्रातरोऽन्ये मनस्विनः ॥ प्रोचुः संहारको रुद्रः पूजनीयो मुमुक्षुभिः ॥३०॥ अयं हि भगवान्रुद्रः सर्व्वं जगदिदं शिवः ॥ तमोगुणं समाश्रित्य कालान्ते संहरेत्प्रभुः ॥ ३१ ॥ या सा घोरतमा मूर्त्तिरस्य तेजोमयी परा ॥ संहरेद्विद्यया पूर्व्वं संसारं शूलभृत्तया ॥ ३२ ॥ ततस्तानब्रवीद्राजा विचिन्त्यासौ जयध्वजः ॥ सत्त्वेन मुच्यते जन्तुः सत्त्वात्मा भगवान्हरिः॥३३॥ तमूचुर्भ्रातरो रुद्रः सेवितः सात्त्विकैर्जनैः ॥ मोचयेत्सत्त्वसंयुक्तः पूजयेत्सततं हरम् ॥ ३४ ॥ अथाब्रवीद्राजपुत्रः प्रहसंन्वै जयध्वजः ॥ स्वधर्म्मो मुक्तये युक्तो नान्यो मुनिभिरिष्यते ॥ ३५ ॥ तथा च वैष्णवीं शक्तिं नृपाणान्दधतां सदा ॥ आराधनम्परो धर्म्मो मुरारेरमितौजसः ॥ ३६ ॥ तमब्रवीद्राजपुत्रः कृष्णो मतिमतां वरः ॥ यदर्ज्जुनोऽस्मज्जनकः स धर्म्मं कृतवानिति ॥ ३७ ॥ एवं विवादे वितते शूरसेनोऽब्रवीद्वचः ॥ प्रमाणमृषयो ह्यत्र ब्रूयुस्ते तत्तथैव तत् ॥ ३८ ॥ ततस्ते राजशार्दूलाः पप्रच्छुर्ब्रह्मवादिनः ॥ गत्वा सर्व्वे सुसंरब्धाः सप्तर्षीणां तदाश्रमम् ॥ ३९ ॥ तानब्रुवंस्ते मुनयो वसिष्ठाद्या यथार्थतः ॥ या यस्याभिमता पुंसः सा हि तस्यैव देवता ॥ ४० ॥ किन्तु कार्यविशेषेण पूजिता चेष्टदा नृणाम् ॥ विशेषात्सर्व्वदा नायन्नियमो ह्यन्यथा नृपाः ॥ ४१ ॥ नृपाणां दैवतं विष्णुस्तथेशश्च पुरन्दरः ॥ विप्राणामग्निरादित्यो ब्रह्मा चैव पिनाकधृक् ॥४२॥

---

१ पूजनीयश्च य इति पा० । २ स्वयम्भुव इति पा० । ३ संहारकृद्रुद्रः इति पा० । ४ सर्व्वमिति पा० । ५ सह सत्त्वैरिति पा० । ६ पन्था इति, अधर्म्ममुक्तये मुक्त इति पा० । ७ यत्तथैव इति पा० । ८ तदाश्रयतिमि पा० । ९ तथैव चेति पा० । १० त्रिशूलभृदिति पा० ।

देवानां दैवतं विष्णुर्दानवानां त्रिशूलधृक् ॥ गन्धर्वाणां तथा सोमो यक्षाणामपि कथ्यते ॥ ४३ ॥ विद्याधराणां वाग्देवी सिद्धानां भगवान् हरिः ॥ रक्षसां शङ्करो रुद्रः किन्नराणाञ्च पार्व्वती ॥ ४४ ॥ ऋषीणां भगवान् ब्रह्मा महादेवस्त्रिशूलभृत् ॥ मान्या स्त्रीणांमुमा देवी तथा विष्ण्वीशभास्कराः ॥ ४५ ॥ गृहस्थानाञ्च सर्व्वे स्युर्ब्रह्म वै ब्रह्मचारिणाम् ॥ वैखानसानामर्कः स्याद्यतीनाञ्च महेश्वरः ॥ ४६ ॥ भूतानां भगवान्रुद्रः कूष्माण्डानां विनायकः॥ सर्व्वेषां भगवान् ब्रह्मा देवदेवः प्रजापतिः ॥ ४७ ॥ इत्येवं भगवान् ब्रह्मा स्वयं देवो ह्यभाषत ॥ तस्माज्जयध्वजो नूनं विष्णवाराधनमर्हति ॥ ४८ ॥ किन्तु रुद्रेण तादात्म्यं बुद्ध्वा पूज्यो हरिर्नरैः ॥ अन्यथा नृपतेः शत्रुं न हरिः संहरेद्यतः ॥ ४९ ॥ सम्प्रणम्याथ ते जग्मुः पुरीम्परमशोभनाम् ॥ पालयाञ्चक्रिरे पृथ्वीञ्जित्वा सर्व्वांत्रिपून्रणे ॥ ५१ ॥ ततः कदाचिद्विप्रेन्द्रा विदेहो नाम दानवः ॥ भीषणः सर्व्वसत्त्वानां पुरीं तेषां समाययौ ॥ ५१ ॥ दंष्ट्राकरालो दीप्तात्मा युगान्तदहनोपमः ॥ शूलमादाय सूर्याभं नादयन्वै दिशो दश ॥ ५२ ॥ तन्नादश्रवणान्मर्त्यास्तत्र ये निवसन्ति ते ॥ तत्यजुर्ज्जीवितं त्वन्ये दुद्रुवुर्भयविह्वलाः ॥ ५३ ॥ ततः सर्व्वे सुसंयत्ताः कार्त्तवीर्यात्मजास्तदा ॥ शूरसेनादयः पञ्च राजानस्तु महावलाः ॥ ५४ ॥ युयुधुर्दानवं शक्तिगिरिकूटासिमुद्गरैः ॥ तान् सर्व्वान् स हि विप्रेन्द्राः शूलेन प्रहसन्निव ॥ ५५ ॥ युद्धाय कृतसंरम्भा विदेहन्त्वभिदुद्रुवुः ॥ शूरोऽस्त्रं प्राहिणोद्रौद्रं शूरसेनस्तु वारुणम् ॥ ५६ ॥ प्राजापत्यं तथा कृष्णो वायव्यं धृष्ण एव च ॥ जयध्वजश्च कौबेरमैन्द्रमाग्नेयमेव च ॥ ५७ ॥ भञ्जयामास शूलेन तान्यस्त्राणि स दानवः ॥ ततः कृष्णो महावीर्यो गदामादाय भीषणाम् ॥ ५८ ॥ स्पृष्टमात्रेण तरसा चिक्षेप च ननाद च ॥ सम्प्राप्य सा गदास्योरो विदेहस्य शिलोपमम् ॥ ५९ ॥ न दानवञ्चालयितुं शशाकान्तकसन्निभम् ॥ दुद्रुवुस्ते भयग्रस्ता दृष्ट्वा तस्यातिपौरुषम् ॥६०॥ जयध्वजस्तु मतिमान् सस्मार जगतः पतिम् ॥ विष्णुं जयिष्णुं लोकादिमप्रमेयमनामयम् ॥६१॥ त्रातारं पुरुषं पूर्व्वं श्रीपतिम्पीतवाससम् ॥ ततः प्रादुरभूच्चक्रं सूर्यायुतसमप्रभम् ॥ ६२ ॥ आदेशाद्वासुदेवस्य भक्तानुग्रहणात्तदा ॥ जग्राह जगतां योनिं स्मृत्वा नारायणं नृपः ॥ ६३ ॥ प्राहिणोद्वै विदेहाय दानवेभ्यो यथा हरिः ॥ सम्प्राप्य तस्य घोरस्य स्कन्धदेशं सुदर्शनम् ॥ ६४ ॥ पृथिव्यां पातयामास शिरोऽद्रिशिखराकृति ॥ तस्मिन् हते देवरिपौ शूराद्या भ्रातरो नृपाः ॥ ६५ ॥ तद्धि चक्रं पुरा विष्णुस्तपसाराध्य शङ्करम् ॥ यस्मादवाप

१ मनूनां स्यादुमा इति पा० । २ विष्णुः सभास्करः इति पा० । ३ नामति पा० । ४ तान् मणम्याय इति पा० । ५ पुरमिति पा० । ६ कार्त्तवीर्यार्जुनात्मजा इति पा० । ७ सृष्ट्वा मन्त्रेण इति पा० । ८ सर्व्वमिति पा० । ९ भक्तानुग्रहकारणादिति पा० ।

तत्तस्मादसुराणां विनाशकम् ॥ ६६ ॥ समाययुः पुरीं रम्यां भ्रातरश्चाप्यपूजयन् ॥ श्रुत्वाजगाम भगवाञ्जयध्वजपराक्रमम्[1] ॥ ६७ ॥ कार्त्तवीर्यसुतं द्रष्टुं विश्वामित्रो महामुनिः ॥ तमागतमथो दृष्ट्वा राजा सम्भ्रान्तलोचनः[2] ॥ ६८ ॥ समावेश्यासने रम्ये पूजयामास भावतः ॥ उवाच भगवन् घोरः प्रसादाद्भवतोऽसुरः ॥ ६९ ॥ निपातितो मया सोऽर्थं[3] विदेहो दानवेश्वरः ॥ त्वद्वाक्याच्छिन्नसन्देहो विष्णुं सत्यपराक्रमम् ॥ ७० ॥ प्रपन्नः शरणं तेन प्रसादो मे कृतः शुभः ॥ यक्ष्यामि परमेशानं विष्णुं पद्मदलेक्षणम् ॥ ७१ ॥ कथङ्केन विधानेन[4] सम्पूज्यो हरिरीश्वरः ॥ कोऽयन्नारायणो देवः किंप्रभावश्च सुव्रत ॥७२॥ सर्व्वमेतन्ममाचक्ष्व परङ्कौतूहलं हि मे ॥ जयध्वजस्य वचनं श्रुत्वा शान्तो मुनिस्ततः ॥ दृष्ट्वा हरौ परां भक्तिं विश्वामित्र उवाच ह ॥ ७३ ॥ विश्वामित्र उवाच ॥ यतः प्रवृत्तिर्भूतानां यस्मिन्सर्वं यतो जगत् ॥ ७४ ॥ स विष्णुः सर्व्वभूतात्मा तमाश्रित्य विमुच्यते ॥ यमक्षरात्परतरात्परं प्राहुर्गुहाश्रयम्[5] ॥ ७५ ॥ आनन्दं परमं व्योम स वै नारायणः स्मृतः ॥ नित्योदितो निर्विकल्पो नित्यानन्दो निरञ्जनः ॥ ॥ ७६ ॥ चतुर्व्यूहधरो विष्णुरव्यूहः प्रोच्यते स्वयम् ॥ परमात्मा परन्धाम परं व्योम परं पदम् ॥ ७७ ॥ त्रिपादमक्षरं ब्रह्म तमाहुर्ब्रह्मवादिनः ॥ स वासुदेवो विश्वात्मा योगात्मा पुरुषोत्तमः ॥ ७८ ॥ यस्यांशसम्भवो ब्रह्मा रुद्रोऽपि परमेश्वरः ॥ स्ववर्णाश्रमधर्म्मेण[6] पुंसायं पुरुषोत्तमः ॥ ॥ ७९ ॥ अकामाद्धतभावेन[7] समाराध्यो न चान्यथा ॥ एतावदुक्त्वा भगवान्विश्वामित्रो महातपाः ॥ ८० ॥ शूराद्यैः पूजितो विप्रो जगामाथ स्वमाश्रमम् ॥ अथ शूरादयो देवमयजन्त महेश्वरम् ॥ ८१ ॥ यज्ञेन यज्ञगम्यन्तं निष्कामा रुद्रमव्ययम् ॥ तान्वसिष्ठस्तु भगवान्याजयामास धर्म्मवित् ॥ ८२ ॥ गौतमोऽगस्तिरत्रिश्च सर्व्वे रुद्रपराक्रमाः[8] ॥ विश्वामित्रस्तु भगवाञ्जयध्वजमरिन्दमम् ॥ ८३ ॥ याजयामासास भूतादिमादिदेवं जनार्द्दनम् ॥ तस्य यज्ञे महायोगी साक्षाद्देवः स्वयं हरिः ॥ ८४ ॥ आविरासीत्स भगवान्तदद्भुतमिवाभवत् ॥ ८५ ॥ जयध्वजोऽपि तं विष्णुं रुद्रस्य परमां तनुम् ॥ इत्येवं सर्व्वदा बुद्ध्वा यत्नेनायजदच्युतम् ॥ ८६ ॥ य इमं शृणुयान्नित्यं जयध्वजपराक्रमम् ॥ सर्व्वपापविनिर्मुक्तो विष्णुलोकं स गच्छति ॥ ८७ ॥ इति श्रीकूर्म्मपुराणे सोमवंशानुकीर्त्तनं नाम

---

१ कृत्वा जयपराक्रममिति पा० । २ सम्भ्रान्तमानस इति पा० । ३ संख्ये इति, मयास्त्रेण इति पा० । ४ मकारेण इति पा० । ५ गुहाश्रया इति, गुहाशयमिति पा० । गुहा मनीषिणां परिशुद्धा बुद्धिरिति शङ्करभाष्ये । ६ सवर्णाश्रमधर्म्मेण इति पा० । ७ रुद्रस्यायं परा मूर्त्तिरिति, अकामहतभावेन इति, अकामाद्धतभावेनइति पा० । ८ रुद्रपरायण इति पा० ।

द्वाविंशोऽध्यायः ॥ २२ ॥ सूत उवाच ॥ जयध्वजस्य पुत्रोऽभूत्तालजङ्घ इति स्मृतः ॥ शतं पुत्रास्तु तस्यासन्तालजङ्घा इति स्मृताः[1] ॥ १ ॥ तेषां ज्येष्ठो महावीर्यो वीतिहोत्रोऽभवन्नृपः ॥ वृषप्रभृतयश्चान्ये यादवाः पुण्यकर्म्मिणः ॥ २ ॥ वृषो[2] वंशकरस्तेषां तस्य पुत्रोऽभवन्मधुः ॥ मधोः पुत्रशतं त्वासीद्वृषणस्तस्य[3] वंशभाक् ॥ ३ ॥ वीतिहोत्रसुतश्चापि[4] विश्रुतोऽनन्त इत्यतः[5] ॥ दुर्ज्जयस्तस्य पुत्रोऽभूत्सर्व्वशास्त्रविशारदः ॥ ४ ॥ तस्य भार्य्या रूपवती गुणैः सर्व्वैरलङ्कृता ॥ पतिव्रतासीत्पतिना स्वधर्म्मपरिपालिका ॥ ५ ॥ स कदाचिन्महाराजः[6] कालिन्दीतीरसंस्थिताम् ॥ अपश्यदुर्व्वशीं देवीं गायन्तीं मधुरश्रुतिम्[7] ॥ ६ ॥ ततः कामाहतमनास्तत्समीपमुपेत्य वै ॥ प्रोवाच सुचिरङ्कालं देवि रन्तुं मयार्हसि ॥ ७ ॥ सा देवी नृपतिं दृष्ट्वा रूपलावण्यसंयुतम् ॥ रेमे तेन चिरङ्कालं कामदेवमिवापरम् ॥८॥ कालात्प्रबुद्धो राजा तामुर्व्वशीं[8] प्राह शोभनाम् ॥ गमिष्यामि पुरीं रम्यां हसन्ती त्यब्रवीद्वचः ॥९॥ न ह्येतेनोपभोगेन[9] भवतो राजसुन्दर ॥ प्रीतिः सञ्जायते मह्यं स्थातव्यं वत्सरं पुनः ॥ १० ॥ तामब्रवीत्स मतिमान् गत्वा शीघ्रतरं पुरीम् ॥ आगमिष्यामि भूयोऽत्र तन्मेऽनुज्ञातुमर्हसि ॥ ११ ॥ तमब्रवीत्सा सुभगा तथा कुरु विशाम्पते ॥ नान्ययाप्सरसा तावद्रन्तव्यम्भवता पुनः ॥ १२ ॥ ओमित्युक्त्वा ययौ तूर्णं पुरीं परमशोभनाम् ॥ गत्वा पतिव्रतां पत्नीं दृष्ट्वा भीतोऽभवन्नृपः ॥ १३ ॥ संप्रेक्ष्य सा गुणवती भार्य्या तस्य पतिव्रता ॥ भीतं प्रसन्नया प्राह[10] वाचा पीनपयोधरा ॥ १४ ॥ स्वामिन् किमत्र भवतो भीतिरद्य प्रवर्त्तते ॥ तद्ब्रूहि मे यथातत्त्वं[11] न राज्ञां[12] कीर्त्तये त्विदम् ॥ १५ ॥ स तस्या वाक्यमाकर्ण्य लज्जावनतमानसः ॥ नोवाच किञ्चिन्नृपतिर्ज्ञानदृष्ट्या विवेद सा ॥ १६ ॥ न भेतव्यं त्वया राजन् कार्य्यं पापविशोधनम् ॥ भीते त्वयि महाराज राष्ट्रन्ते नाशमेष्यति ॥ १७ ॥ ततः[13] स राजा द्युतिमान्निर्गत्य तु पुरात्ततः ॥ गत्वा कण्वाश्रमं पुण्यं दृष्ट्वा तत्र महामुनिम् ॥ १८ ॥ निशम्य[14] कण्ववदनात्प्रायश्चित्तविधिं शुभम् ॥ जगाम हिमवत्पृष्ठं समुद्दिष्टं[15] महाबलः ॥ १९ ॥ सोऽपश्यत्पथि[16] राजेन्द्रो गन्धर्व्ववरमुत्तमम् ॥ भ्राजमानं श्रिया व्योम्नि भूषितं दिव्यमालया ॥ २० ॥ वीक्ष्य[17] मालाममित्रघ्नः सस्माराप्सरसं वराम् ॥ उर्व्वशीन्तां मनश्चक्रे तस्या एवेयमर्हति ॥ २१ ॥ सोऽतीव कामुको राजा गन्धर्व्वेणाथ तेन हि ॥ चकार सुमहद्युद्धं मालामादातुमुद्यतः ॥ २२ ॥ विजित्य समरे

१ प्रकीर्त्तिता इति पा० । २ वृषा इति, वृषादंशकर इति पा० । ३ कर्षण इति, वृषश्च इति पा० । ४ सुतश्चासीदिति पा० । ५ ऽत्वनिरक्षक इति, इत्युत इति पा० । ६ कदाचिन्महाभाग इति पा० । ७ मधुरस्वरामिति पा० । ८ राजा सावुर्व्वशीमिति पा० । ९ नह्यनेनोपभोगेनेति पा० । १० भीतं प्राह प्रसन्नैवेति पा० । ११ तद्ब्रवीहि यथा तत्त्वमिति पा० । १२ रागादिति पा० । १३ तदेति पा० । १४ निर्दिश्य इति पा० । १५ हिमवत्पार्श्वे समुद्दिश्य इति पा० । १६ सोऽपश्यदथ इति पा० । १७ वीक्ष्यमाणो ह्यमित्रघ्न इति पा० ।

मा[illegible] जगाम तामप्सरङ्कालिन्दीन्द्रष्टुमादरात् ॥ २३ ॥ अदृष्ट्वाप्सरसं तत्र कामबाणाभिपीडितः ॥ बभ्राम सकलां पृथ्[illegible]३ ॥ आक्रम्य हिमवत्पार्श्वमुर्व्वशीदर्शनोत्सुकः ॥ जगाम शैलप्रवरं हेमकूटमिति श्रुतम् ॥ २५ ॥ तत्र तत्राप्सरोवर्यां दृष्ट्वा[illegible]धिरे घोरं भूषितं चित्रमालया ॥२६॥ संस्मरन्नुर्व्वशीवाक्यं तस्यां संसक्तमानसः ॥ न पश्यति स्म ताः सर्व्वा गिरेः शृङ्गाणि जग्मिवान्॥२७॥तत्राप्यप्सरसन्दिव्यामदृष्ट्वा कामपीडितः॥देवलोकं महामेरुं ययौ देवपराक्रमः ॥२८॥ स तत्र मानसं नाम सरस्त्रैलोक्यविश्रुतम्॥भेजे शृङ्गमतिक्रम्य स्वबाहुबलभावितः॥२९॥तस्य तीरेषु सुभगाञ्चरन्तीमतिलालसाम्॥दृष्टवाननवद्याङ्गीं तस्यै मालान्ददौ पुनः ॥३०॥ स मालया तदा देवीं भूषितां प्रेक्ष्य मोहितः ॥ रेमे कृतार्थमात्मानं जानानः सुचिरन्तया ॥ ३१ ॥ अथोर्व्वशी राजवर्यं रतान्ते वाक्यमब्रवीत् ॥ किं कृतं भवता वीर पुरीङ्गत्वा तदा नृप ॥ ३२ ॥ स तस्यै सर्व्वमाचष्ट पत्न्या यत्समुदीरितम् ॥ कण्वस्य दर्शनञ्चैव मालापहरणं तथा ॥ ३३ ॥ श्रुत्वैतद्व्याहृतन्तेन गच्छेत्याह हितैषिणी ॥ शापन्दास्यति ते कण्वो ममापि भवतः प्रिया ॥ ३४ ॥ तया सक्तुन्महाराजः प्रोक्तोऽपि मदमोहितः ॥ न च तत्कृतवान्वाक्यं तत्र संन्यस्तमानसः ॥ ३५ ॥ तदोर्व्वशी कामरूपा राज्ञे स्वं रूपमुत्कटम् ॥ सुरोमशम्पिङ्गलाक्षं दर्शयामास सर्व्वदा ॥ ३६ ॥ तस्यां विरक्तचेतस्कः स्मृत्वा कण्वाभिभाषितम् ॥ धिङ्मामिति विनिश्चित्य तपः कर्त्तुं समारभत् ॥ ३७ ॥ संवत्सरद्वादशकं कन्दमूलफलाशनः ॥ भूय एव द्वादशकं वायुभक्षोऽभवन्नृपः ॥ ३८ ॥ गत्वा कण्वाश्रमं भीत्यां तस्मै सर्व्वं न्यवेदयत् ॥ वासमप्सरसा भूयस्तपोयोगमनुत्तमम् ॥ ३९ ॥ वीक्ष्य तं राजाशार्दूलं प्रसन्नो भगवानृषिः ॥ कर्त्तुंकामो हि निर्बीजं तस्याघमिदमब्रवीत् ॥ ४० ॥ कण्व उवाच ॥ गच्छ वाराणसीं दिव्यामीश्वराध्युषितां पुरीम् ॥ आस्ते मोचयितुं लोकं तत्र देवो महेश्वरः ॥ ४१ ॥ स्नात्वा सन्तर्प्य विधिवद्गङ्गायां देवताः पितॄन् ॥ दृष्ट्वा विश्वेश्वरं लिङ्गं किल्बिषान्मोक्ष्यसे क्षणात्॥४२॥प्रणम्य शिरसा कण्वमनुज्ञाप्य च दुर्जयः॥वाराणस्यां हरं दृष्ट्वा पापान्मुक्तोऽभवत्ततः॥४३॥ जगाम स्वपुरीं शुभ्रां याजयामास मेदिनीम् ॥ याजयामास तं कण्वो याचितो घृणया मुनिः ॥४४॥ तस्य पुत्रोऽथ मतिमान् सुप्रतीक इति स्मृतः ॥

---

१ स्मृतमिति पा० । २ शृङ्गाण्यतिक्रम्य इति पा० । ३ स तस्य तीरे इति पा० । ४ मेने इति पा० । ५ नमः सुरुचिरं यथा इति पा० । ६ वृथा इति पा० । ७ शापन्ददातीति पा० । ८ न तत्याजाथ तत्पार्श्वमिति पा० । ९ विनिश्चित्य तपः कर्त्तुं, ततः कर्त्तुमिति पा० । समारभत इति साधु । १० प्रीत्येति पा० । ११ शिवमिति पा० । १२ रम्यामिति पा० । १३ धर्म्मत इति पा० । १४ सुमीत इति विश्रुत इति पा० ।

बभूव जातमात्रं तं राजानमुपतस्थिरे ॥ ४५ ॥ उर्व्वश्याश्च महावीर्याः सप्त देवसुतोपमाः ॥ कन्या जगृहिरे सर्व्वा गन्धर्व्यो दयिता द्विजाः ॥ ४६ ॥ एष वः कथितः सम्यक् सहस्राजितउत्तमः ॥ वंशः पापहरो नृणां क्रोष्टोरपि निबोधत ॥ ४७ ॥ इति श्रीकूर्म्मपुराणे राजवंशानुकीर्त्तने त्रयोविंशोऽध्यायः ॥ २३ ॥ अथवंशकीर्तिवर्णनम् ॥ सूत उवाच ॥ क्रोष्टोरेकोऽभवत्पुत्रो वज्रवानिति विश्रुतः ॥ तस्य पुत्रोऽभवच्छान्तिः कुशिकस्तत्सुतोऽभवत् ॥ १ ॥ कुशिकादभवत्पुत्रो नाम्ना चित्ररथो बली ॥ अथ चैत्ररथिर्लोके शशबिन्दुरिति स्मृतः ॥ २ ॥ तस्य पुत्रः पृथुयशा राजाभूद्धर्म्मतत्परः ॥ पृथुकर्म्मा च तत्पुत्रस्तस्मात्पृथुजयोऽभवत् ॥ ३ ॥ पृथुकीर्त्तिरभूत्तस्मात्पृथुदानस्ततोऽभवत् ॥ पृथुश्रवास्तस्य पुत्रस्तस्यासीत्पृथुसत्तमः ॥ ४ ॥ उशनास्तस्य पुत्रोऽभूच्छतेषुस्तत्सुतोऽभवत् ॥ तस्माद्वै रुक्मकवचः परावृत्तश्च तत्सुतः ॥ ५ ॥ परावृत्तसुतो जज्ञे यामघो लोकविश्रुतः ॥ तस्माद्विदर्भः सञ्जज्ञे विदर्भात्क्रथकौशिकौ ॥ ६ ॥ लोमपादस्तृतीयस्तु बभ्रुस्तस्यात्मजो नृपः ॥ धृतिस्तस्याभवत्पुत्रः श्वेतस्तस्याप्यभूत्सुतः ॥ ७ ॥ श्वेतस्य पुत्रो बलवान्नाम्ना विश्वसहः स्मृतः ॥ तस्य पुत्रो महावीर्य्यः प्रभावात्कौशिकः स्मृतः ॥ ८ ॥ अभूत्तस्य सुतो धीमान् सुमन्तश्च ततोऽनलः ॥ अनलस्य सुतः श्वेनिः श्वेनेरन्येऽभवन्सुताः ॥ ९ ॥ तेषां प्रधानो द्युतिमान्वपुष्मान्तत्सुतोऽभवत् ॥ वपुष्मतो बृहन्मेधाः श्रीदेवस्तत्सुतोऽभवत् ॥ १० ॥ तस्य वीतरथो विप्रा रुद्रभक्तो महाबलः ॥ क्रथस्याप्यभवत्कुन्तिर्वृष्णिस्तस्याभवत्सुतः ॥ ११ ॥ तस्मान्नवरथो नाम बभूव सुमहाबलः ॥ कदाचिन्मृगयां यातो दृष्ट्वा राक्षसमूर्जितम् ॥ १२ ॥ दुद्राव महताविष्टो भयेन मुनिपुङ्गवाः ॥ अन्वधावत संक्रुद्धो राक्षसस्तं महाबलः ॥ १३ ॥ दुर्य्योधनोऽग्निसंकाशः शूलासक्तमहाकरः ॥ राजा नवरथो भीतो नातिदूरादवस्थितम् ॥ १४ ॥ अपश्यत्परमं स्थानं सरस्वत्याः सुगोपितम् ॥ स तद्वेगेन महता सम्प्राप्य मतिमान्नृपः ॥ १५ ॥ ववन्दे शिरसा दृष्ट्वा साक्षाद्देवीं सरस्वतीम् ॥ तुष्टाव वाग्भिरिष्टाभिर्बद्धाञ्जलिरमित्रजित् ॥ १६ ॥ पपात दण्डवद्भूमौ त्वामहं शरणङ्गतः ॥ नमस्यामि महादेवीं साक्षाद्देवीं सरस्वतीम् ॥ १७ ॥ वाग्देवतामनाद्यन्तामीश्वरीं ब्रह्मचारिणीम् ॥ नमस्ये जगतां योनिं योगिनीं परमां कलाम् ॥ १८ ॥ हिरण्यगर्भसम्भूतां त्रिनेत्रां चन्द्रशेखराम् ॥ नमस्ये परमानन्दाश्चित्कलां

१ कुंशकुरिति पा० । २ शशिबिन्दुरिति पा० । ३ पृथुवर्म्मा इति पा० । ४ तस्याभूदिति पा० । ५ रोमपाद इति पा० । ६ रोमपादसुतो यस्तु रुद्रस्तस्यात्मजोऽभवदिति पा० । ७ सन्तः इति, सत इति पा० । ८ सन्तस्य इति पा० । ९ शुभ इति पा० । १० मजावान् कौशिकस्तत इति पा० । ११ सुमन्तुस्तत्सुतोऽनल इति, ततोऽमल इति पा० । १२ अमलस्य इति पा० । १३ कुम्भी इति पा० । १४ हिरण्यगर्भमहिषीमिति पा० ।

ब्रह्मरूपिणीम् ॥ १९ ॥ पाहि मां परमेशानि भीतं शरणमागतम् ॥ एतस्मिन्नन्तरे क्रुद्धो राजानं राक्षसेश्वरः ॥ २० ॥ हन्तुं समागतः स्थानं यत्र देवी सरस्वती ॥ समुद्यम्य तथा शूलं प्रविष्टो बलगर्व्वितः ॥२१॥ त्रिलोकमातुर्हि स्थानं शशाङ्कादित्यसन्निभम् ॥ तदन्तरे महद्भूतं युगान्तादित्यसन्निभम् ॥ २२ ॥ शूलेनोरसि निर्भिद्य पातयामास तम्भुवि ॥ गच्छेत्याह महाराज न स्थातव्यं त्वया पुनः ॥ २३ ॥ इदानीं निर्भयस्तूर्णं स्थानेऽस्मिन्राक्षसो हतः ॥ ततः प्रणम्य हृष्टात्मा राजा नवरथः परम् ॥ २४ ॥ पुरीं जगाम विप्रेन्द्राः पुरन्दरपुरोपमाम् ॥ स्थापयामास देवेशीन्तत्र भक्तिसमन्वितः ॥ २५ ॥ ईजे च विविधैर्यज्ञैर्होमैर्देवीं सरस्वतीम् ॥ तस्य चासीद्दशरथः पुत्रः परमधार्म्मिकः ॥ २६ ॥ देव्या भक्तो महातेजाः शकुनिस्तस्य चात्मजः ॥ तस्मात्करम्भः सम्भूतो देवरातोऽभवत्ततः ॥ २७ ॥ ईजे स चाश्वमेधेन देवक्षत्रश्च तत्सुतः ॥ मधुस्तस्य तु दायादस्तस्मात्कुरुरजायत ॥ २८ ॥ पुत्रद्वयमभूत्तस्य सुत्रामा चानुरेव च ॥ अनोस्तु प्रियगोत्रोऽभूदंशुस्तस्य च रिक्थभाक् ॥ २९ ॥ अथांशोरन्धको नाम विष्णुभक्तः प्रतापवान् ॥ महात्मा दाननिरतो धनुर्व्वेदविदां वरः ॥ ३० ॥ स नारदस्य वचनाद्वासुदेवार्चने रतः ॥ शास्त्रं प्रवर्त्तयामास कुण्डगोलादिभिः श्रुतम् ॥ ३१ ॥ तस्य नाम्ना तु विख्यातं सात्वतानाञ्च शोभनम् ॥ प्रवर्त्तते महच्छास्त्रं कुण्डादीनां हितावहम् ॥ ३२ ॥ सात्वतस्तस्य पुत्रोऽभूत्सर्व्वशास्त्रविशारदः ॥ पुण्यश्लोको महाराजस्तेन वै तत्प्रवर्त्तितम् ॥ ३३ ॥ सात्वतान्सत्वसम्पन्नान्कौशल्या सुषुवे सुतान् ॥ अन्धकं वै महाभोजं वृष्णिन्देवावृधं नृपम् ॥ ३४ ॥ ज्येष्ठञ्च भजमानाख्यं धनुर्वेदविदां वरम् ॥ तेषां देवावृधो राजा चचार परमन्तपः ॥ ३५ ॥ पुत्रः सर्व्वगुणोपेतो मम भूयादिति प्रभुः ॥ तस्य बभ्रुरिति ख्यातः पुण्यश्लोकोऽभवन्नृपः ॥ ३६ ॥ धार्म्मिको रूपसम्पन्नस्तत्त्वज्ञानरतः सदा ॥ भजमानाः श्रियन्दिव्यां भजमानाद्विजज्ञिरे ॥ ३७ ॥ तेषां प्रधानौ विख्यातौ निमिः कृकण एव च ॥ महाभोजकुले जाता भोजा वैमातृकास्तथा ॥ ३८ ॥ वृष्णेः सुमित्रो बलवाननमित्रस्तिमिस्तथा ॥ अनमित्रादभून्निघ्नो निघ्नस्य द्वौ बभूवतुः ॥ ३९ ॥ प्रसेनस्तु महाभागः सत्राजिन्नाम चोत्तमः ॥ अनमित्राच्छिनिर्ज्जज्ञे कनिष्ठो वृष्णिनन्दनात् ॥ ४० ॥ सत्यवाक् सत्यसम्पन्नः सत्यकस्तत्सुतोऽभवत् ॥ सात्यकिर्युयुधानस्तु तस्या

१ तदा इति, महाशूलमिति पा० । २ बलदर्पित इति पा० । ३ देवक्षेत्रश्च इति पा० । ४ तस्मात्कुरुवशोऽभवदिति पा० । ५ कुरुकुत्सोऽभूदिति पा० । ६ अथांशोः सात्वत इति, सत्वतो नाम इति, साधक इति पा० । ७ सात्वतात्सत्वसम्पन्नं कौशल्या सुषुवे सुतमिति पा० । ८ भजमानस्य सृञ्जय्यामिति, भजमानस्य संज्ञायामिति पा० । ९ शनिः कुकश एव च इति, कृतक इति पा० । १० वृष्णेस्तु पुत्र इति, विष्णोस्तु मित्र इति, विष्णोस्तु पुत्र इति पा० । ११ च्छिनिरिति च्छनिरिति पा० ।

८

सङ्गोऽभवत्सुतः ॥ ४१ ॥ कुणिस्तस्य सुतो धीमांस्तस्य पुत्रो युगन्धरः ॥ माद्र्यां वृष्णिः सुतो जज्ञे वृष्णेर्वै यदुनन्दनः ॥४२॥ जज्ञाते तनयौ वृष्णेः श्वफल्कश्चित्रकस्तु हि ॥ श्वफल्कः काशिराजस्य सुतां भार्य्यामविन्दत ॥ ४३ ॥ तस्यामजनयत्पुत्रमक्रूरं नाम धार्म्मिकम् ॥ उपमङ्गुं तथा मङ्गु मन्ये च बहवः सुताः ॥ ४४ ॥ अक्रूरस्य स्मृतः पुत्रो देववानिति विश्रुतः ॥ उपदेवश्च देवात्मा तयोर्विश्वप्रमाथिनौ ॥ ४५ ॥ चित्रकस्याभवत्पुत्रः पृथुर्विपृथुरेव च ॥ अश्वग्रीवः सुबाहुश्च सुधाश्वकगवेक्षकौ ॥ ४६ ॥ अन्धकस्य सुतायाँन्तु लेभे च चतुरः सुतान् ॥ कुकुरं भजमानञ्च शमीकं बलगर्वितम् ॥ ४७ ॥ कुकुरस्य सुतो वृष्णिर्वृष्णेर्स्तु तनयोऽभवत् ॥ कपोतरोमा विख्यातस्तस्य पुत्रो विलोमकः ॥ ४८ ॥ तस्यासीत्तुम्बुरुसखा विद्वान्पुत्रस्तमः किल ॥ तमस्याप्यभवत्पुत्रस्तथैवानकदुन्दुभिः ॥ ४९ ॥ स गोवर्द्धनमासाद्य ततापं विपुलन्तपः ॥ वरन्तस्मै ददौ देवो ब्रह्मा लोकमहेश्वरः ॥ ५० ॥ वंशस्ते चाक्षया कीर्त्तिर्ज्ञानयोगस्तथोत्तमः ॥ गुरोरप्यधिकं विप्राः कामरूपित्वमेव च ॥ ५१ ॥ स लब्ध्वा वरमव्यग्रो वरेण्यावृषवाहनम् ॥ पूजयामास गानेन स्थाणुं त्रिदशपूजितम् ॥ ५२ ॥ तस्य गानरतस्याथ भगवानम्बिकापतिः ॥ कन्यारत्नं ददौ देवो दुर्लभं त्रिदशैरपि ॥ ५३ ॥ तया स सङ्गतो राजा गानयोगमनुत्तमम् ॥ अशिक्षयदमित्रघ्नः प्रियान्तां भ्रान्तलोचनाम् ॥ ५४ ॥ तस्यामुत्पादयामास सुभुजं नाम शोभनम् ॥ रूपलावण्यसम्पन्नां ह्रीमतीमिति कन्यकाम् ॥ ५५ ॥ ततस्तं जननी पुत्रं बाल्ये वयसि शोभनम् ॥ शिक्षयामास विधिवद्गानविद्याञ्च कन्यकाम् ॥ ५६ ॥ कृतोपनयनो वेदानधीत्य विधिवद्गुरोः ॥ उद्ववाहात्मजां कन्यां गन्धर्व्वाणान्तु मानसीम् ॥ ५७ ॥ तस्यामुत्पादयामास पञ्च पुत्राननुत्तमान् ॥ वीणावादनतत्त्वज्ञान् गानशास्त्रविशारदान् ॥ ५८ ॥ पुत्रैः पौत्रैः सपत्नीको राजा गानविशारदः ॥ पूजयामास गानेन देवं त्रिपुरनाशनम् ॥ ५९ ॥ ह्रीमतीश्चारुसर्व्वाङ्गीं श्रीमिवायतलोचनाम् ॥ सुबाहुनामा गन्धर्व्वस्तामादाय ययौ पुरीम् ॥ ६० ॥ तस्यामप्यभवन् पुत्रा गन्धर्व्वस्य सुतेजसः ॥ सुषेणधीरसुग्रीवसुभोजनरवाहनाः ॥ ६१ ॥ अथासीदभिजित्पुत्रश्चन्दनोदकदुन्दुभेः ॥ पुनर्वसुश्चाभिजितः सम्बभूवाहुकस्ततः ॥ ६२ ॥ आहुकस्योग्रसेनश्च देवकश्च द्विजोत्तमाः ॥ देवकस्य सुता वीरा जज्ञिरे त्रिदशोपमाः ॥ ६३ ॥

१ तस्याष्टाङ्ग इति पा०। २ कालस्तस्येति, कुक्षिस्तस्य इति पा० । ३ उपमद्गुस्तथा मद्गुरिति पा० ।४ सुतो जज्ञे इति पा०। ५ पुण्यात्मा इति पा० । ६ सुपार्श्वकगवेषणौ इति पा०। ७ अन्धकात्काश्यदुहिता इति पा० । ८ धृष्णिर्धृष्णेस्तु इति । ९ कपोतनामा विपुलस्तस्य पुत्रो विलेपकः इति पा० । १० पुत्रोनलः इति पा० । ११ तस्य गानेन वश्योऽथ इति पा० । १२ ह्रीमतीमपीति पा० । १३ ह्रीमती चापि या कन्या श्रीरिवायतलोचना इति पा० । १४ वीरस्थानकदुन्दुभिरिति पा० । १५ सम्बभूवाहुकः सुत इति पा० ।

देववानुपदेवश्च सुदेवो देवरक्षितः ॥ तेषां स्वसारः सप्तासन्वसुदेवाय ता ददौ ॥ ६४ ॥ धृतदेवोपदेवा च तथान्या देवरक्षिता ॥ श्रीदेवा शान्तिदेवा च सहदेवा च सुव्रता ॥ ६५ ॥ देवकी चापि तासान्तु वरिष्ठाभूत्सुमध्यमा ॥ उग्रसेनस्य पुत्रोऽभून्न्यग्रोधः कंस एव च ॥ ६६ ॥ सुभूमी राष्ट्रपालश्च तुष्टिमाञ्छङ्कुरेवं च ॥ भजमानादभूत्पुत्रः प्रख्यातोऽसौ विदूरथः ॥ ६७ ॥ तस्य सूरसमस्तस्मात्प्रतिक्षत्रश्च तत्सुतः ॥ स्वयं भोजस्ततस्तस्माद्धा त्रीकः शत्रुतापनः ॥ ६८ ॥ कृतवर्म्माथ तत्पुत्रः शूरसेनः सुतोऽभवत् ॥ वसुदेवोऽथ तत्पुत्रो नित्यं धर्म्मपरायणः ॥ ६९ ॥ वसुदेवान्महाबाहुर्वासुदेवो जगद्गुरुः ॥ बभूव देवकीपुत्रो देवैरभ्यर्थितो हरिः ॥ ७० ॥ रोहिणी च महाभागा वसुदेवस्य शोभना ॥ असूत पत्नी सङ्कर्षं रामं ज्येष्ठं हलायुधम् ॥ ७१ ॥ स एव परमात्मासौ वासुदेवो जगन्मयः ॥ हलायुधः स्वयं साक्षाच्छेषः सङ्कर्षणः प्रभुः ॥ ७२ ॥ भृगुशापच्छलेनैव मानयन्मानुषीं तनुम् ॥ बभूव तस्यां देवक्यां रोहिण्यामपि माधवः ॥ ७३ ॥ उमादेहसमुद्भूता योगनिद्रा च कौशिकी ॥ नियोगाद्वासुदेवस्य यशोदातनया त्वभूत् ॥ ७४ ॥ ये चान्ये वसुदेवस्य वासुदेवाग्रजाः सुताः ॥ प्रागेव कंसस्तान्सर्व्वाञ्जघान मुनिसत्तमाः ॥ ७५ ॥ सुषेणश्च ततो दायी भद्रसेनो महाबलः ॥ वज्रदम्भो भद्रसेनः कीर्त्तिमानपि पूजितः ॥ ७६ ॥ हतेष्वेतेषु सर्व्वेषु रोहिणी वसुदेवतः ॥ असूत रामं लोकेशं बलभद्रं हलायुधम् ॥ ७७ ॥ जातेऽथ रामे देवानामादिमात्मानमच्युतम् ॥ असूत देवकी कृष्णं श्रीवत्साङ्कितवक्षसम् ॥ ७८ ॥ रेवती नाम रामस्य भार्य्यासीत्सुगुणान्विता ॥ तस्यामुत्पादयामास पुत्रौ द्वौ निशितोल्मुकौ ॥ ७९ ॥ षोडशस्त्रीसहस्राणि कृष्णस्याक्लिष्टकर्म्मणः ॥ बभूवुश्चात्मजास्तासु शतशोऽथ सहस्रशः ॥ ८० ॥ चारुदेष्णः सुचारुश्च चारुवेषो यशोधरः ॥ चारुश्रवाश्चारुयशाः प्रद्युम्नः साम्ब एव च ॥ ८१ ॥ रुक्मिण्यां वासुदेवस्य महाबलपराक्रमाः ॥ विशिष्टाः सर्व्वपुत्राणां सम्बभूवुरिमे सुताः ॥ ८२ ॥ तान्दृष्ट्वा तनयान्वीरान्रौक्मिणेयाञ्जनार्द्दनात् ॥ जाम्बवत्यब्रवीत्कृष्णं भार्य्या तस्य शुचिस्मिता ॥ ८३ ॥ मम त्वं पुण्डरीकाक्ष विशिष्टगुणवत्तरम् ॥ सुरेशसम्मितं पुत्रं देहि दानवसूदन ॥ ८४ ॥ जाम्बवत्या वचः श्रुत्वा जगन्नाथः स्वयं हरिः ॥ समारेभे तपः कर्त्तुं तपोनिधिररिन्दमः ॥ ८५ ॥ तच्छृणुध्वं मुनिश्रेष्ठा यथासौ देवकीसुतः ॥

---

१ वृकदेव्युपदेवीति, वृकदेवोपदंष्ट्रीति पा० । २ सुसीमा इति पा० । ३ चक्षुरेव इति पा० । ४ प्रतिक्षत्रस्ततोऽभवदिति पा० । ५ देवलस्तत्सुतः स्मृत इति पा० । ६ स शूरस्तत्सुतोधीमान्वसुदेवोऽथ-तत्सुत इति पा०। ७ उमा देवी समुद्भूता इति पा०। ८ मुनिपुङ्गवा इति पा०। ९ तयोदापिर्भद्रसेन इति पा०। १० ऋजुदासो भद्रदासः इति पा०। ११ पूर्व्वज इति पा०। १२ श्रीवत्सकृतलक्षणमिति पा० । १३ निशठोल्मुकौ इति, निषधोल्मुकौ इति पा० । १४ विशिष्टं गुणवत्तरमिति पा० । १५ सुरेशसदृशमिति पा० ।

दृष्ट्वा लेभे सुतं रुद्रं तप्त्वा तीव्रम्महत्तपः ॥ ८६ ॥ इति श्रीकूर्म्मपुराणे यदुवंशानुकीर्तनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ अथ यदुवंशकृष्णकीर्तिवर्णनम् ॥ सूत उवाच ॥ अथ देवो हृषीकेशो भगवान्पुरुषोत्तमः ॥ ततापं घोरं पुत्रार्थं निधानं तपसस्तपः ॥ १ ॥ स्वेच्छयाप्यवतीर्णोऽसौ कृतकृत्योऽपि विश्वसृक् ॥ चचार स्वात्मनो मूलं बोधयन्परमेश्वरम् ॥ २ ॥ जगाम योगिभिर्जुष्टं नानापक्षिसमाकुलम् ॥ आश्रमन्तूपमन्योर्वै मुनीन्द्रस्य महात्मनः ॥ ३ ॥ पतत्रिराजमारूढः सुपर्णमतितेजसम् ॥ शङ्खचक्रगदापाणिः श्रीवत्साङ्कितलक्षणः ॥ ४ ॥ नानाद्रुमलताकीर्णं नानापुष्पोपशोभितम् ॥ ऋषीणामाश्रमैर्जुष्टं वेदघोषनिनादितम् ॥ ५ ॥ सिंहर्क्षशरभाकीर्णं शार्दूलगजसंयुतम् ॥ विमलस्वादुपानीयैः सरोभिरुपशोभितम् ॥ ६ ॥ आरामैर्विविधैर्जुष्टं देवतायतनैः शुभैः ॥ ऋषिभिर्ऋषिपुत्रैश्च महामुनिगणैस्तथा ॥ ७ ॥ वेदाध्ययनसम्पन्नैः सेवितश्चाग्निहोत्रिभिः ॥ योगिभिर्ध्याननिरतैर्नासाग्रन्यस्तलोचनैः ॥ ८ ॥ उपेतं सर्व्वतः पुण्यं ज्ञानिभिस्तत्त्वदर्शिभिः ॥ नदीभिरभितोजुष्टं जापकैर्ब्रह्मवादिभिः ॥ ९ ॥ सेवितं तापसैः पुण्यैरीशाराधनतत्परैः ॥ प्रशान्तैः सत्यसङ्कल्पैर्निःशोकैर्निरुपद्रवैः ॥ १० ॥ भस्मावदातसर्व्वाङ्गैः रुद्रजाप्यपरायणैः ॥ मुण्डितैर्जटिलैः शुद्धैस्तथान्यैश्च शिखाजटैः ॥ ११ ॥ सेवितं तापसैर्नित्यं ज्ञानिभिर्ब्रह्मवादिभिः ॥ तत्राश्रमवरे रम्ये सिद्धाश्रमविभूषिते ॥ १२ ॥ गङ्गा भगवती नित्यं वहत्येवाघनाशिनी ॥ स तत्र वीक्ष्य विश्वात्मा तापसान्वीतकल्मषान् ॥ १३ ॥ प्रणामेनाथ वचसा पूजयामास माधवः ॥ तन्ते दृष्ट्वा जगद्योनिं शङ्खचक्रगदाधरम् ॥ १४ ॥ प्रणेमुर्भक्तिसंयुक्ता योगिनां परमं गुरुम् ॥ स्तुवन्ति वैदिकैर्म्मन्त्रैः कृत्वा हृदि सनातनम् ॥ १५ ॥ प्रोचुरन्योन्यमव्यक्तमादिदेवं महामुनिम् ॥ अयं स भगवानेकः साक्षी नारायणः परः ॥ १६ ॥ आगच्छत्यधुना देवः प्रधानपुरुषः स्वयम् ॥ अयमेवाव्ययः स्रष्टा संहर्त्ता चैव रक्षकः ॥ १७ ॥ अमूर्त्तो मूर्त्तिमान् भूत्वा मुनीन्द्रष्टुमिहागतः ॥ एष धाता विधाता च समागच्छति सर्व्वगः ॥ १८ ॥ अनादिरक्षयोऽनन्तो महाभूतो महेश्वरः ॥ श्रुत्वा बुद्ध्वा हरिस्तेषां वचांसि वचनातिगः ॥ १९ ॥ ययौ स तूर्णं गोविन्दः स्थानं तस्य महात्मनः ॥ उपस्पृश्याथ भावेन तीर्थे तीर्थे स यादवः ॥ २० ॥ चकार देवकीसूनुर्देवर्षिपितृतर्पणम् ॥ नदीनां तीरसंस्थाने स्थापितानि मुनीश्वरः ॥ २१ ॥ लिङ्गानि पूजयामास शम्भोरमिततेजसः ॥ दृष्ट्वा दृष्ट्वा समायान्तं यत्र यत्र जनार्दनम् ॥ २२ ॥ पूजयाञ्चक्रिरे

१ तपसान्तप इति पा० । २ विश्वधृगिति पा० । ३ भावमैश्वरमिति पा० । ४ शार्दूलगजसंकुलमिति पा० । ५ निरुपप्लवैरिति पा० । ६ न्यासिभिरिति पा० । ७ तदाश्रमवरे इति पा० । ८ भागिरथीइति पा० । ९ स तानुद्दिश्य इति पा० । १० पुराणः पुरुष इति पा० । ११ भगवानिति पा० । १२ तत्र तत्र इति पा० ।

पुष्पैरक्षतैस्तान्निवासिनः ॥ समीक्ष्य वासुदेवन्तं शार्ङ्गशङ्खासिधारिणम् ॥ २३ ॥ तस्थिरे निश्चलाः सर्व्वे शुभाङ्गा यतमानसाः ॥ यानि तत्रारुरुक्षूणां मानसानि जनार्द्दनम् ॥ २४ ॥ दृष्ट्वा समाहितान्यासन्निष्क्रामन्ति पुरा हरिम् ॥ अथावगाह्य गङ्गायां कृत्वा देवर्षितर्पणम् ॥२५॥ आदाय पुष्पवर्य्याणि मुनीन्द्रस्याविशद्गृहम् ॥ दृष्ट्वा तं योगिनां श्रेष्ठं भस्मोद्धूलितविग्रहम् ॥ २६ ॥ जटाचीरधरं शान्तं ननाम शिरसा मुनिम् ॥ आलोक्य कृष्णमायान्तं पूजयामास तत्त्ववित् ॥ २७ ॥ आसने वासयामास योगिनां प्रथमातिथिम् ॥ उवाच वचसां योनिज्ञानीमः परमम्पदम् ॥ २८ ॥ विष्णुमव्यक्तसंस्थानं शिष्यभावेन संस्थितम् ॥ स्वागतन्ते हृषीकेश सफलानि तपांसि नः ॥ २९ ॥ यत्साक्षादेव विश्वात्मा मद्गेहं विष्णुरागतः ॥ त्वां न पश्यन्ति मुनयो यतन्तोपीह योगिनः ॥ ३० ॥ तादृशस्यात्रभवतः किमागमनकारणम् ॥ श्रुत्वोपमन्योस्तद्वाक्यं भगवान्देवकीसुतः ॥ व्याजहार महायोगी प्रसन्नं प्रणिपत्य तम् ॥ ३१ ॥ कृष्ण उवाच ॥ भगवन्द्रष्टुमिच्छामि गिरीशं कृत्तिवासम् ॥ ३२ ॥ सम्प्राप्तो भवतः स्थानं भगवद्दर्शनोत्सुकः ॥ कथं स भगवानीशो दृश्यो योगविदां वरः ॥ ३३ ॥ मयाचिरेण कुत्राहं द्रक्ष्यामि तमुमापतिम् ॥ प्रत्याह भगवानुक्तो दृश्यते परमेश्वरः ॥ ३४ ॥ भक्त्यैवोग्रेण तपसा तत्कुरुष्वेह संयतः ॥ इहेश्वरं देवदेवं मुनीन्द्रा ब्रह्मवादिनः ॥ ३५ ॥ ध्यायन्त्याराधयन्त्येनं योगिनस्तापसाश्च ये ॥ इह देवः सपत्नीको भगवान्वृषभध्वजः ॥ ३६ ॥ क्रीडते विविधैर्भूतैर्योगिभिः परिवारितः ॥ इहाश्रमे पुरा रुद्रं तपस्तप्त्वा सुदारुणम् ॥ ३७ ॥ लेभे महेश्वराद्योगं वसिष्ठो भगवानृषिः ॥ इहैव भगवान्व्यासः कृष्णद्वैपायनः स्वयम् ॥ ३८ ॥ दृष्ट्वा तं परमेशानं लब्धवान् ज्ञानमैश्वरम् ॥ इहाश्रमपदे रम्ये तपस्तप्त्वा कपर्दिनः ॥ ३९ ॥ अविन्दन्पुत्रकान्रुद्रात्सूरयो भक्तिसंयुताः ॥ इह देवा महादेवीं भवानीञ्च महेश्वरीम् ॥ ४० ॥ संस्तुवन्तो महादेवं निर्भया निर्वृतिं ययुः ॥ इहाराध्य महादेवं सावर्णिस्तपतां वरः ॥ ४१ ॥ लब्धवान्परमं योगं ग्रन्थकारत्वमुत्तमम् ॥ प्रवर्त्तयामास सतां कृत्वा वै संहितां शुभाम् ॥ ४२ ॥ ( इहैव संहितां दृष्ट्वा कामो यः शशिपायिनः ॥ महादेवश्चकारेमां पौराणीं तन्नियोगतः ॥ द्वादशैव सहस्राणि श्लोकानां पुरुषोत्तम ॥ इह प्रवर्त्तिता पुण्या द्व्यष्टसाहस्रिकोत्तरा ॥ वायवीयोत्तरं नाम पुराणं वेदसम्मतम् ॥ ) द्विजः पौराणिकीं पुण्यां प्रसीं

१ शुभाङ्गावनतानना इति पा० । २ शुभाङ्गं तन्निवासिन इति पा० । ३ महीमिति पा० । ४ चासयामास इति पा० । ५ योगिनमिति पा० । ६ त्वां नमस्यन्तीति पा० । ७ यतन्त इत्यार्षं, यतमाना इति साधु । ८ तादृशस्याथ भवत इति, तावदाख्याहि भवत इति पा० । ९ केशिमर्द्दन इति पा० । १० वचनमिति पा० । ११ पुत्रार्थमिति पा० । १२ इत्याह इति, वनेह भगवान् रुद्र इति पा० । १३ यन्नत इति पा० । १४ ध्यायन्त आसते देवं यामिनस्तापसाश्च ये इति पा० । १५ परमं ज्ञानमिति पा० । १६ लब्धवानीश्वरेश्वरमिति पा० । १७ इहाश्रमवरे इति पा० । १८ कपर्दिनमिति पा० । १९ इहैव देवताः पूर्व्वं कालाद्भीता महेश्वरम् । दृष्टवन्तो हरं देवमिति, इहैव देवताः पूर्व्वं कालाग्निं वा महेश्वरमिति पा० । २० शुभामिति पा० । २१ द्विज इति पा० । २२ पौराणिकीं सुपुण्यार्थं सच्छिष्येष्विति पा० ।

देन द्विजोत्तमैः ॥ इहैव ख्यापितं शिष्यैर्वैशम्पायनभाषितम् ॥ ४३ ॥ याज्ञवल्क्यं महायोगी दृष्ट्वात्र तपसा हरम् ॥ चकार तन्नियोगेन योगशास्त्रमनुत्तमम् ॥ ४४ ॥ इहैव भृगुणा पूर्व्वं तप्त्वा पूर्व्वं महातपः ॥ शुक्रो महेश्वरात्पुत्रो लब्धो योगविदां वरः ॥ ४५ ॥ तस्मादिहैव देवेश तपस्तप्त्वा सुदुश्चरम् ॥ द्रष्टुमर्हसि विश्वेशमुग्रम्भीमकपर्द्दिनम् ॥ ४६ ॥ एवमुक्त्वा ददौ ज्ञानमुपमन्युर्महामुनिः ॥ व्रतं पाशुपतं योगं कृष्णायाक्लिष्टकर्म्मणे ॥ ४७ ॥ स तेन मुनिवर्य्येण व्याहृतो मधुसूदनः ॥ तत्रैव तपसा देवं रुद्रमाराधयत्प्रभुः ॥ ४८ ॥ भस्मोद्धूलितसर्व्वाङ्गो मुण्डो वल्कलसंयुतः ॥ जजाप रुद्रमनिशं शिवैकाहितमानसः ॥ ४९ ॥ ततो बहुतिथे काले सोमः सोमार्द्धभूषणः ॥ अदृश्यत महादेवो व्योम्नि देव्या महेश्वरः ॥ ५० ॥ किरीटिनं गदिनञ्चित्रमालं पिनाकिनं शूलिनन्देवदेवम् ॥ शार्दूलचर्म्माम्बरसंवृताङ्गं देव्या महादेवमसौ ददर्श ॥ ५१ ॥ प्रभुम्पुराणं पुरुषं पुरस्तात्सनातनं योगिनमीशितारम् ॥ अणोरणीयांसमनन्तशक्तिं प्राणेश्वरं शम्भुमसौ ददर्श ॥ ५२ ॥ परश्वधासक्तकरं त्रिनेत्रं नृसिंहचर्मावृतभस्मगात्रम् ॥ समुद्गिरन्तं प्रणवं बृहन्तं सहस्रसूर्य्यप्रतिमन्ददर्श ॥ ५३ ॥ न यस्य देवा न पितामहोऽपि नेन्द्रो न चाग्निर्वरुणो न मृत्युः ॥ प्रभावमद्यापि वदन्ति रुद्रं तमादिदेवं पुरतो ददर्श ॥ ५४ ॥ तदान्वपश्यद्गिरिशस्य वामे स्वात्मानमव्यक्तमनन्तरूपम् ॥ स्तुवन्तमीशं बहुभिर्वचोभिः शङ्खासिचक्रान्वितहस्तमाद्यम् ॥ ५५ ॥ कृताञ्जलिं दक्षिणतः सुरेशं हंसाधिरूढं पुरुषं ददर्श ॥ स्तुवानमीशस्य परम्प्रभावं पितामहं लोकगुरुं दिविस्थम् ॥ ५६ ॥ गणेश्वरानर्कसहस्रकल्पान्नन्दीश्वरादीनमितप्रभावान् ॥ त्रिलोकभर्तुः पुरतोऽन्वपश्यत्कुमारमग्निप्रतिमं गणेशम् ॥ ५७ ॥ मरीचिमत्रिम्पुलहम्पुलस्त्यम्प्रचेतसन्दक्षमथापि कण्वम् ॥ पराशरन्तत्परतो वसिष्ठं स्वायम्भुवञ्चापि मनुन्ददर्श ॥ ५८ ॥ तुष्टाव मन्त्रैरमरप्रधानं बद्धाञ्जलिर्विष्णुरुदारबुद्धिः ॥ प्रणम्य देव्या गिरिशं स्वभक्त्या स्वात्मन्यथात्मानमसौ विचिन्त्य ॥ ५९ ॥ कृष्ण उवाच ॥ नमोऽस्तु ते शाश्वत सर्व्वयोगे ब्रह्मादयस्त्वामृषयो वदन्ति ॥ तमश्च सत्त्वञ्च रजस्त्रयञ्च त्वामेव सर्व्वं प्रवदन्ति सन्तः ॥ ६० ॥ त्वं ब्रह्मा हरिरथ रुद्र विश्वकर्त्ता संहर्त्ता दिनकरमण्डलाधिवासः ॥ प्राणस्त्वं हुतवहवासवादिभेदस्त्वामेकं शरणमुपैमि देवमीशम् ॥ ६१ ॥ साङ्ख्यास्त्वामगुणमथाहुरेकरूपं योगस्थं सततमुपासते हृदिस्थम् ॥ वेदास्त्वामभिदधतीह रुद्रमीड्यं त्वामेकं शरणमुपैमि देवमीशम् ॥ ६२ ॥ त्वत्पादे कुसुममथापि पत्रमेकं दत्वासौ भवति



---

१ प्रभुमिति पा॰ । २ सौम्यः इति पा॰ । ३ विदन्तिइति पा॰ । ४ प्रयत इति पा॰ । ५ चक्रार्पित इति पा॰ । ६ गणेश्वरानेक इति पा॰ । ७ विशाखमिति पा॰ । ८ विश्वयोग इति, सर्व्वयोने इति पा॰ । ९ ब्रह्माधिपन्त्वामृषय इति पा॰ । १० तपश्चतत्त्वञ्च रजस्तमश्च इति, त्वमेव सत्त्वं च रजस्तमश्च इति पा॰ । ११ विश्वयोनिरिति, इति पा॰ । १२ रुद्रमग्निमिति पा॰ ।

विमुक्तविश्वबन्धः ॥ सर्व्वाघं प्रणुदति सिद्धयोगिजुष्टं स्मृत्वा ते पदयुगलं भवत्प्रसादात् ॥ ६३ ॥ यस्याशेषविभागहीनममलं हृद्यन्तरावस्थितं ते त्वां योनिमनन्तमेकमचलं सत्यं परं सर्व्वगम् ॥६४॥ स्थानं प्राहुरनादिमध्यनिधनं यस्मादिदं जायते नित्यं त्वाहमुपैमि सत्यविभवं विश्वेश्वरन्तं शिवम् ॥ ६५ ॥ ॐनमो नीलकण्ठाय त्रिनेत्राय च रंहसे ॥ महादेवाय ते नित्यमीशानाय नमो नमः ॥ ६६ ॥ नमः पिनाकिने तुभ्यं नमो मुण्डाय दण्डिने ॥ नमस्ते वज्रहस्ताय दिग्वस्त्राय कपर्द्दिने ॥ ६७ ॥ नमो भैरवनादाय कालरूपाय दंष्ट्रिणे ॥ नागयज्ञोपवीताय नमस्ते वह्निरेतसे ॥ ६८ ॥ नमोऽस्तु ते गिरीशाय स्वाहाकाराय ते नमः ॥ नमो मुक्ताट्टहासाय भीमाय च नमो नमः ॥ ६९ ॥ नमस्ते कामनाशाय नमः कालप्रमाथिने ॥ नमो भैरववेषाय हराय च निषङ्गिणे ॥ ७० ॥ नमोऽस्तु ते त्र्यम्बकाय नमस्ते कृत्तिवाससे ॥ नमोऽम्बिकाधिपतये पशूनां पतये नमः ॥ ७१ ॥ नमस्ते व्योमरूपाय व्योमाधिपतये नमः ॥ नरनारीशरीराय साङ्ख्ययोगप्रवर्त्तिने ॥ ७२ ॥ नमो भैरवनाथाय देवानुगतलिङ्गिने ॥ कुमारगुरवे तुभ्यं देवदेवाय ते नमः ॥ ७३ ॥ नमो यज्ञाधिपतये नमस्ते ब्रह्मचारिणे ॥ मृगव्याधाय महते ब्रह्माधिपतये नमः ॥ ७४ ॥ नमो हंसाय विश्वाय मोहनाय नमो नमः ॥ योगिने योगगम्याय योगमायाय ते नमः ॥ ७५ ॥ नमस्ते प्राणपालाय घण्टानादप्रियाय च ॥ कपालिने नमस्तुभ्यं ज्योतिषां पतये नमः ॥ ७६ ॥ नमो नमोऽस्तु ते तुभ्यं भूय एव नमो नमः ॥ मह्यं सर्व्वात्मना कामान् प्रयच्छ परमेश्वर ॥ ७७ ॥ सूत उवाच ॥ एवं हि भक्त्या देवेशमभिष्टूय स माधवः ॥ पपात पादयोर्विप्रा देवदेव्योः स दण्डवत् ॥ ७८ ॥ उत्थाप्य भगवान् सोमः कृष्णं केशिनिषूदनम् ॥ बभाषे मधुरं वाक्यं मेघगम्भीरनिःस्वनः ॥ ७९ ॥ किमर्थं पुण्डरीकाक्ष तप्यते भवता तपः ॥ त्वमेव दाता सर्व्वेषां कामानां कर्म्मणामिह ॥ ८० ॥ त्वं हि सा परमा मूर्त्तिर्मम नारायणाह्वया ॥ न विना त्वां जगत्सर्व्वं विद्यते पुरुषोत्तम ॥ ८१ ॥ वेत्थ नारायणानन्तमात्मानं परमेश्वरम् ॥ महादेवं महायोगं स्वेन योगेन केशव ॥ ८२ ॥ श्रुत्वा तद्वचनं कृष्णः प्रहसन्वै वृषध्वजम् ॥ उवाचान्वीक्ष्य विश्वेशन्देवीञ्च हिमशैलजाम् ॥ ८३ ॥ ज्ञातं हि भवता सर्व्वं स्वेन योगेन शङ्कर ॥ इच्छाम्यात्मसमं पुत्रं त्वद्भक्तन्देहि शङ्कर ॥ ८४ ॥ तथास्त्वित्याह विश्वात्मा प्रहृष्टमनसा हरः ॥ देवीमालोक्य गिरिजां केशवं परिषस्वजे ॥ ८५ ॥ ततः सा जगतां माता शङ्करा

१ तत्त्वं ज्योतिरिति, यस्य ज्योरिति पा० । २ ब्रह्मरेतसे इति, चार्करेतसे इति पा० । ३ वसूनामिति पा० । ४ नित्यमिति पा० । ५ मोहाय इति पा० । ६ मभिस्तुत्य इति पा० । ७ तपस्तप्तं त्वया व्यय इतिपा० । ८ कामिनामिह इति पा० । ९ नानवाप्तं त्वया तात इति पा० । १० पुरुषोत्तममिति पा० । ११ येन इति पा० ।

र्द्धशरीरिणी ॥ व्याजहार हृषीकेशं देवी हिमगिरीन्द्रजा ॥ ८६ ॥ अहं जाने तवानन्त निश्चलां सर्व्वदाच्युत ॥ अनन्यामीश्वरे भक्तिमात्मन्यपि च केशव ॥ ८७ ॥ त्वं हि नारायणः साक्षात्सर्व्वात्मा पुरुषोत्तमः ॥ प्रार्थितो दैवतैः पूर्व्वं सञ्जातो देवकीसुतः ॥ ८८ ॥ पश्य त्वमात्मनात्मानमात्मानं मम सम्प्रति ॥ नावयोर्विद्यते भेद एकं पश्यन्ति सूरयः ॥ ८९ ॥ इमानिह वरानिष्टान्मत्तो गृह्णीष्व केशव ॥ सर्व्वज्ञत्वं तथैश्वर्यं ज्ञानं तत्पारमेश्वरम् ॥ ९० ॥ ईश्वरे निश्चलां भक्तिमात्मन्यपि परं वरम् ॥ एवमुक्तस्तया कृष्णो महादेव्या जनार्द्दनः ॥ ९१ ॥ आदेशं शिरसा गृह्य देवोऽप्याह तथेश्वरम् ॥ प्रगृह्य कृष्णं भगवानथेशः करेण देव्या सह देवदेवः ॥ सम्पूज्यमानो मुनिभिः सुरेशैर्जगाम कैलासगिरिं गिरीशः ॥ ९२ ॥ इति श्रीकूर्म्मपुराणे यदुवंशानुकीर्त्तने कृष्णतपश्चरणं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥ अथ शंकरकीर्तिवर्णनम् ॥ सूत उवाच ॥ प्रविश्य मेरुशिखरं कैलासं कनकप्रभम् ॥ ररामं भगवान्सोमः केशवेन महेश्वरः ॥ १ ॥ अपश्यंस्ते महात्मानं कैलासगिरिवासिनः ॥ पूजयाञ्चक्रिरे कृष्णं देवदेवमिवाच्युतम् ॥ २ ॥ चतुर्बाहुमुदाराङ्गं कालमेघसमप्रभम् ॥ किरीटिनं शार्ङ्गपाणिं श्रीवत्साङ्कितवक्षसम् ॥ ३ ॥ दीर्घबाहुं विशालाक्षं पीतवाससमच्युतम् ॥ दधानमुरसा मालां वैजयन्तीमनुत्तमाम् ॥ ४ ॥ भ्राजमानं श्रिया देव्या युवानमतिकोमलम् ॥ पद्माङ्घ्रिं पद्मनयनं सस्मितं सद्गतिप्रदम् ॥५॥ कदाचित्तत्र लीलार्थं देवकीनन्दवर्द्धनः ॥ भ्राजमानः श्रिया कृष्णश्चचार गिरिकन्दरम् ॥६॥ गन्धर्वाप्सरसां मुख्या नागकन्याश्च कृत्स्नशः ॥सिद्धा यक्षाश्च गन्धर्व्वा देवास्तश्च जगन्मयम् ॥७॥ दृष्ट्वाश्चर्य्यम्परं गत्वा हर्षादुत्फुल्ललोचनाः ॥ मुमुचुः पुष्पवर्षाणि तस्य मूर्ध्नि महात्मनः ॥ ८ ॥ गन्धर्व्वकन्यका दिव्यास्तद्वदप्सरसो वराः ॥ दृष्ट्वा चकमिरे कृष्णं सुस्तुतं शुचिभूषणाः॥९॥काश्चिद्गायन्ति विविधं गानं गीतविशारदाः॥सम्प्रेक्ष्य देवकीसूनुं सुन्दरं काममोहिताः॥१०॥काश्चिद्विलासवहुला नृत्यन्ति स्म तदग्रतः॥ सम्प्रेक्ष्य सस्मितं काश्चित्पपुस्तद्वदनामृतम्॥११॥ काश्चिद्भूषणवर्याणि स्वांगादादाय सादरम् ॥ भूषयाञ्चक्रिरे कृष्णं कन्या लोकविभूषणम् ॥ १२ ॥ काश्चिद्भूषणवर्याणि समादाय तदङ्गतः ॥ स्वात्मानं भूषयामासुः स्वात्मकैरपि माधवम् ॥ १३ ॥ काचिदागत्य कृष्णस्य समीपं काममोहिता ॥ चुचुम्ब वदनाम्भोजं हरेर्मुग्धमृगेक्षणा ॥ १४ ॥ प्रगृह्य काचिद्गोविन्दं करेण भवनं स्वकम् ॥ प्रापयामास लोकादिं मायया तस्य मोहिता ॥ १५ ॥ तासां स भगवान् कृष्णः कामान् कमललोचनः ॥ बहूनि कृत्वा



१ वत्स जाने तवानन्ता मिति पा० । २ अमलं पदमिति, परमं पदमिति पा० । ३ आशिष इति पा० । ४ देवः माह महेश्वर इति पा० । ५ भगवानपीश इति पा० । ६ रराम इति परस्मै पदमार्षम् । ७ गिरिकन्दरेइति पा० । ८ अप्सरसामिति पा० । ९ स्वस्तवस्त्रविभूषणाइति पा० । १० विविधा गीतीरिति पा० । ११ कामिन्यो लोकभूषणमिति पा० । १२ चापि गोविन्दमिति पा० ।

रूपाणि पूरयामास लीलया ॥ १६ ॥ एवं वै सुचिरं कालन्देवदेवपुरे हरिः ॥ रेमे नारायणः श्रीमान्मायया मोहयञ्जगत् ॥१७॥ गते बहुतिथे काले द्वारवत्या निवासिनः ॥ बभूवुर्विकला भीता गोविन्दविरहे जनाः ॥१८॥ ततः सुपर्णो बलवान्पूर्व्वमेव विसर्जितः ॥ स कृष्णं मार्गमाणस्तु हिमवन्तं ययौ गिरिम् ॥ १९ ॥ अदृष्ट्वा तत्र गोविन्दं प्रणम्य शिरसा मुनिम् ॥ आजगामोपमन्युं तं पुरीं द्वारवतीं पुनः ॥२०॥ तदन्तरे महादैत्या राक्षसाश्चातिभीषणाः ॥आजग्मुर्द्वारकां शुभ्रां भीषयन्तः सहस्रशः ॥२१॥ स तान्सुपर्णो बलवान् कृष्णतुल्यपराक्रमः ॥ हत्वा युद्धेन महता रक्षति स्म पुरीं शुभाम् ॥ २२ ॥ एतस्मिन्नेव काले तु नारदो भगवानृषिः ॥ दृष्ट्वा कैलासशिखरे कृष्णं द्वारवतीं गतः ॥ २३ ॥ तं दृष्ट्वा नारदमृषिं सर्व्वे तत्र निवासिनः ॥ प्रोचुर्नारायणो नाथः कुत्रास्ते भगवान्हरिः ॥ २४ ॥ स तानुवाच भगवान्कैलासशिखरे हरिः ॥ रमतेऽद्य महायोगी तं दृष्ट्वाहमिहागतः ॥ २५ ॥ तस्योपश्रुत्य वचनं सुपर्णः पततां वरः ॥ जगामाकाशगो विप्राः कैलासं गिरिमुत्तमम् ॥ २६ ॥ ददर्श देवकीसूनुं भवने रत्नमण्डिते ॥ तत्रासनस्थं गोविन्दं देवदेवान्तिके हरिम् ॥ २७ ॥ उपास्यमानममरैर्दिव्यस्त्रीभिः समन्ततः ॥ महादेवगणैः सिद्धैर्योगिभिः परिवारितम् ॥ २८ ॥ प्रणम्य दण्डवद्भूमौ सुपर्णः शङ्करं शिवम् ॥ निवेदयामास हरिं प्रवृत्तं द्वारकापुरे ॥ २९॥ ततः प्रणम्य शिरसा शङ्करं नीललोहितम् ॥ आजगाम पुरीं कृष्णः सोऽनुज्ञातो हरेण तु ॥ ३० ॥ आरुह्य कश्यपसुतं स्त्रीगणैरभिपूजितः ॥ वचोभिरमृतास्वादैर्मानितो मधुसूदनः ॥ ३१ ॥ वीक्ष्य यान्तममित्रघ्नं गन्धर्व्वाप्सरसां वराः ॥ अन्वगच्छन्महायोगं शङ्खचक्रगदाधरम् ॥ ३२ ॥ विसर्ज्जयित्वा विश्वात्मा सर्व्वा एवाङ्गना हरिः ॥ ययौ स तूर्णं गोविन्दो दिव्यां द्वारवतीं पुरीम् ॥ ३३ ॥ गते देवेऽसुररिपौ न कामिन्यो मुनीश्वराः ॥ निशेव चन्द्ररहिता विना तेन चकाशिरे ॥ ३४ ॥ श्रुत्वा पौरजनास्तूर्णं कृष्णागमनमुत्तमम् ॥ मण्डयाञ्चक्रिरे दिव्यां पुरीं द्वारवतीं शुभाम् ॥ ३५ ॥ पताकाभिर्विशालाभिर्ध्वजैरन्तर्बहिः कृतैः ॥ मालादिभिः पुरीं रम्यां भूषयाञ्चक्रिरे जनाः ॥ ३६ ॥ अवादयन्त विविधान्वादित्रान्मधुरस्वनान् ॥ शङ्खान् सहस्रशो दध्मुर्वीणावादान्वितेनिरे ॥ ३७ प्रविष्टमात्रे गोविन्दे पुरीं द्वारवतीं शुभाम् ॥ अगायन्मधुरं गानं स्त्रियो यौवनशोभिताः ॥ ३८ ॥ दृष्ट्वा ननृतुरीशानं स्थिताः प्रासादमूर्द्धसु ॥ मुमुचुः पुष्पवर्षाणि वसुदेवसुतोपरि ॥ ३९ ॥ प्रविश्य भगवान् कृष्णस्त्वाशीर्व्वादाभिवर्द्धितः ॥ वरासने महायोगी भाति देवीभिरन्वितः ॥ ४० ॥

१ तु इति पा० । २ द्वारावत्यामिति पा० । ३ नगमिति पा० । ४ भगवानिति पा० । ५ तमिति पा० । ६ वरासनस्थमिति पा० । ७ गन्धर्व्वाप्सरसां गणः इति पा० । ८ गतेऽसुररिपौ नैव कामिन्यो मुनिपुङ्गवा इति पा० । ९ ध्वजैरत्नपरिष्कृतैरिति पा० । १० लाजादिभिरिति पा० । ११ यौवनपालिता इति पा० । १२ भवनमिति पा० ।

सुरम्ये मण्डपे शुभ्रे शङ्खाद्यैः परिवारितः ॥ आत्मजैरभितो मुख्यैः स्त्रीसहस्रैश्च संवृतः ॥ तत्रासनवरे रम्ये जाम्बवत्या सहाच्युतः ॥ ४१ ॥ भ्राजते चोमया देवो यथा देव्या समन्वितः ॥४२॥ आजग्मुर्देवगन्धर्वा द्रष्टुं लोकादिमव्ययम् ॥ महर्षयः पूर्व्वजाता मार्कण्डेयादयो द्विजाः ॥४३॥ ततः स भगवान् कृष्णो मार्कण्डेयं समागतम् ॥ ननामोत्थाय शिरसा स्वासनञ्च ददौ हरिः ॥ ४४ ॥ संपूज्य तानृषिगणान् प्रणामेन सहानुगः ॥ विसर्जयामास हरिर्दत्वा तदभिवाञ्छितान् ॥ ४५ ॥ तदा मध्याह्नसमये देवदेवः स्वयं हरिः ॥ स्नातः शुक्लाम्बरो भानुमुपतिष्ठन् कृताञ्जलिः॥ ४६ ॥ जजाप जाप्यं विधिवत्प्रेक्षमाणो दिवाकरम् ॥ तर्पयामास देवेशो देवान् पितृगणान्मुनीन् ॥ ४७ ॥ प्रविश्य देवभवनं मार्कण्डेयेन चैव हि ॥ पूजयामास लिङ्गस्थं भूतेशम्भूतिभूषणम् ॥ ४८ ॥ समाप्य नियमं सर्व्वं नियन्ता स स्वयं नृणाम् ॥ भोजयित्वा मुनिवरं ब्राह्मणानभिपूज्य च ॥ ४९ ॥ कृत्वात्मयोगं विप्रेन्द्रा मार्कण्डेयेन चाच्युतः ॥ कथाम्पौराणिकीं पुण्यां चक्रे पुत्रादिभिर्वृतः ॥ ५० ॥ अथैतत्सर्व्वमखिलं दृष्ट्वा कर्म्म महामुनिः ॥ मार्कण्डेयो हसन्कृष्णं बभाषे मधुरं वचः ॥ ५१ ॥ मार्कण्डेय उवाच ॥ कः समाराध्यते देवो भवता कर्म्मभिः शुभैः ॥ ब्रूहि त्वं कर्म्मभिः पूज्यो योगिनां ध्येय एव च ॥ ५२ ॥ त्वं हि तत्परमं ब्रह्म निर्वाणममलम्पदम् ॥ भारावतरणार्थाय जातो वृष्णिकुले प्रभुः ॥ ५३ ॥ तमब्रवीन्महाबाहुः कृष्णो ब्रह्मविदां वरः ॥ शृण्वतामेव पुत्राणां सर्व्वेषां प्रहसन्निव ॥ ५४ ॥ श्रीभगवानुवाच ॥ भवता कथितं सर्व्वं तथ्यमेव न संशयः ॥ तथापि देवमीशानं पूजयामि सनातनम् ॥ ५५ ॥ न मे विप्रास्ति कर्त्तव्यं नानवाप्तं कथञ्चन ॥ पूजयामि तथापीशञ्जानन्वै परमं शिवम् ॥ ५६ ॥ न वै पश्यन्ति ते देवं मायया मोहिता जनाः ॥ ततश्चैवात्मनो मूलं ज्ञापयन् पूजयामि तम् ॥ ५७ ॥ न च लिङ्गार्चनात्पुण्यं लोके दुर्गतिनाशनम् ॥ तथा लिङ्गे हितायैषां लोकानां पूजयेच्छिवम् ॥ ५८ ॥ योऽहन्तल्लिंगमित्याहुर्वेदवादविदो जनाः ॥ ततोऽहमात्ममीशानं पूजयाम्यात्मनैव तत् ॥ ५९ ॥ तस्यैव परमा मूर्त्तिस्तन्मयोऽहं न संशयः ॥ नावयोर्विद्यते भेदो वेदेष्वेतन्न संशयः ॥ ६० ॥ एष देवो महादेवः सदा संसारभीरुभिः ॥ यार्ज्यः पूज्यश्च वन्द्यश्च ज्ञेयो लिंगे महेश्वरः ॥ ६१ ॥ मार्कण्डेय उवाच ॥ किं तल्लिंगं सुरश्रेष्ठ लिंगे संपूज्यते च कः ॥ ब्रूहि कृष्ण विशालाक्ष

१ विष्णुरिति पा० । २ स्वासनं मददौ पुनरिति पा० । ३ संपूज्यर्षिगणान् सर्व्वान् प्रणामेन महाभुज इति पा० । ४ दत्त्वा तदभिवाञ्छितानित्यत्र पुंस्त्वमार्षं सामान्यत्वात् क्लीबत्वमेवोचितम् । ५ स्नात्वा इति पा० । ६ उपतिष्ठन्नित्यार्षम् उपतिष्ठमान इति साधु । ७ नियन्तासौ नृणां स्वयमिति पा० । ८ निर्वाणममलं परमिति पा० । ९ हरिरिति पा० । १० महातेजा इति पा० । ११ कृष्ण उवाच इति पा० । १२ ततोऽहं स्वात्मनो मूलमिति पा० । १३ ज्ञापयामि च तं शिवमिति पा० । १४ लोकेऽस्मिन् भीतिनाशनमिति पा० । १५ विप्र इति पा० । १६ आत्ममात्मस्वरूपं स्वरूपार्थे षण् ततो नलोपः । १७ वेदेष्वेवं विनिश्चय इति पा० । १८ ध्येय इतिपा० ।

गहनं ह्येतदुत्तमम् ॥ ६२ ॥ श्रीभगवानुवाच ॥ अव्यक्तं लिंगमित्याहुरानन्दं ज्योतिरक्षयम् ॥ वेदा महेश्वरन्देवमाहुर्लिंगिनमव्ययम् ॥ पुरा चैकार्णवे घोरे नष्टे स्थावरजंगमे ॥ ६३ ॥ प्रबोधार्थं ब्रह्मणो मे प्रादुर्भूतो महाशिवः ॥ तस्मात्कालात्समारभ्य ब्रह्मा चाहं सदैव हि ॥ पूजयावो महादेवं लोकानां हितकाम्यया ॥ ६४ ॥ मार्कण्डेय उवाच ॥ कथं लिंगमभूत्पूर्वमैश्वरं परमम्पदम् ॥ प्रबोधार्थं स्वयं कृष्ण वक्तुमर्हसि साम्प्रतम् ॥ ॥ ६५ ॥ श्रीभगवानुवाच ॥ आसी देकार्णवं घोरमविभागं तमोमयम् ॥ मध्ये चैकार्णवे तस्मिन्छङ्खचक्रगदाधरः ॥ सहस्रशीर्षा भूत्वाहं सहस्राक्षः सहस्रपात् ॥ ६६ ॥ सहस्रबाहुः पुरुषः शयितोऽहं सनातनः ॥ एतस्मिन्नन्तरे दूरे पश्यामि ह्यमितप्रभम् ॥ कोटिसूर्य्यप्रतीकाशं भ्राजमानं श्रियावृतम् ॥ ६७ ॥ चतुर्वक्त्रं महायोगं पुरुषं कारणं प्रभुम् ॥ कृष्णाजिनधरन्देवमृग्यजुःसामभिः स्तुतम् ॥ ६८ ॥ निमषमात्रेण सं माम्प्राप्तो योगविदां वरः ॥ व्याजहार स्वयं ब्रह्मा स्मयमानो महाद्युतिः ॥ ६९ ॥ कस्त्वं कुतो वा किञ्चेह तिष्ठसे वद मे प्रभो ॥ अहं कर्ता हि लोकानां स्वयम्भूः प्रपितामहः ॥ ७० ॥ एवमुक्तस्तदा तेन ब्रह्मणाहमुवाच ह ॥ अहं कर्त्तास्मि लोकानां संहर्ता च पुनः पुनः ॥ ७१ ॥ एवं विवादे वितते मायया परमेष्ठिनः ॥ प्रबोधार्थं परं लिंगं प्रादुर्भूतं शिवात्मकम् ॥ ७२ ॥ कालानलसमप्रख्यं ज्वालामालासमाकुलम् ॥ क्षयवृद्धिविनिर्मुक्तमादिमध्यान्तवर्ज्जितम् ॥ ७३ ॥ ततो मामाह भगवानधो गच्छ त्वमाशु वै ॥ अन्तमस्य विजानीव ऊर्द्धं गच्छेऽहमित्यजः ॥ ७४ ॥ तदाशु समयं कृत्वा गतावूर्द्धमधश्च तौ ॥ पितामहोऽप्यहन्नान्तं ज्ञातवन्तौ समेत्य तौ ॥ ७५ ॥ ततो विस्मयमापन्नौ भीतौ देवस्य शूलिनः ॥ मायया मोहितौ तस्य ध्यायन्तौ विश्वमीश्वरम् ॥ ७६ प्रोच्चरन्तौ महानादमोङ्कारं परमं पदम् ॥ तं प्राञ्जलिपुटौ भूत्वा शम्भुं तष्टुवतुः परम् ॥ ॥ ७७ ॥ ब्रह्मविष्णू ऊचतुः ॥ अनादिमूलसंसाररोगवैद्याय शम्भवे ॥ नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥ ७८ ॥ प्रलया[illegible]संस्थाय प्रलयोद्भूतिहेतवे ॥ नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥ ७९ ॥ ज्वालामालाप्रतीकाय ज्वलनस्तम्भरूपिणे ॥ नमः शिवाय शान्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥ ८० ॥ आदिमध्यान्तहीनाय स्वभावामलदीप्तये ॥ नमः शिवायानन्ताय ब्रह्मणे लिङ्गमूर्त्तये ॥ ८१ ॥ प्रधा[illegible]शाय व्योमरूपाय वेधसे ॥ नमः शिवाय शान्ताय ब्रह्मणे लिंगमूर्त्तये ॥ ८२ ॥ निर्विकाराय सत्याय नित्यायातुलतेजसे ॥ वेदान्तसार[illegible]य काल

---

१ ज्योतिरक्षरमिति पा० । २ युक्तात्मा इति पा० । ३ काञ्चनप्रभमिति पा० । ४ तुं इति पा० । ५ तमिति पा० । ६ विजानीया इति पा० । ७ समाः शतमिति पा० । ८ गृनाङ्ग[illegible] इ[illegible] पा० । ९ स्तम्भमूर्त्तये इति पा० । १० नित्यायामलमूर्त्तये इति पा० ।

रूपाय ते नमः ॥ ८३ ॥ नमः शिवाय शान्ताय ब्रह्मणे लिंगमूर्त्तये ॥ एवं संस्तूयमानस्तु व्यक्तो भूत्वा महेश्वरः ॥ ८४ ॥ भाति देवो महायोगी सूर्य्यकोटिसमप्रभः ॥ वक्त्रकोटिसहस्रेण ग्रसमान इवाम्बरम् ॥ ८५ ॥ सहस्रहस्तचरणः सूर्य्यसोमाग्निलोचनः ॥ पिनाकपाणिर्भगवान् कृत्तिवासास्त्रिशूलधृक् ॥ ८६ ॥ व्यालयज्ञोपवीतश्च मेघदुन्दुभिनिःस्वनः ॥ अथोवाच महादेवः प्रीतोऽहं सुरसत्तमौ ॥ ८७ ॥ पश्येतं मां महादेवं भयं सर्व्वं प्रमुच्यताम् ॥ युवां प्रसूतौ गात्रेभ्यो मम पूर्व्वं सनातनौ ॥ ८८ ॥ अयं मे दक्षिणे पार्श्वे ब्रह्मा लोकपितामहः ॥ वामपार्श्वे च मे विष्णुः पालको हृदये हरः ॥ ८९ ॥ प्रीतोऽहं युवयोः सम्यग्वरन्दद्मि यथेप्सितम् ॥ एवमुक्त्वाथ मान्देवो महादेवः स्वयं शिवः ॥ ९० ॥ आलिङ्ग्य देवं ब्रह्माणं प्रसादाभिमुखोऽभवत् ॥ ततः प्रहृष्टमनसौ प्रणिपत्य महेश्वरम् ॥ ९१ ॥ ऊचतुः प्रेक्ष्य तद्वक्त्रं नारायणपितामहौ ॥ यदि प्रीतिः समुत्पन्ना यदि देयो वरो हि नः ॥ ९२ ॥ भक्तिर्भवतु नौ नित्यं त्वयि देव महेश्वरे ॥ ततः स भगवानीशः प्रहसन्परमेश्वरः ॥ ९३ ॥ उवाच मां महादेवः प्रीतं प्रीतेन चेतसा ॥ देव उवाच ॥ प्रलयस्थितिसर्गाणां कर्त्ता त्वं धरणीपते ॥ ९४ ॥ वत्स वत्स हरे विश्वम्पालयैतच्चराचरम् ॥ त्रिधा भिन्नोऽस्म्यहं विष्णो ब्रह्मविष्णुहराख्यया ॥ ९५ ॥ सर्गरक्षालयगुणैर्निर्गुणेऽपि निरञ्जनः ॥ संमोहन्त्यज भो विष्णो पालयैनं पितामहम् ॥ ९६ ॥ भविष्यत्येव भगवांस्तव पुत्रः सनातनः ॥ अहञ्च भवतो वक्त्रात्कल्पादौ सुररूपधृक् ॥ ९७ ॥ शूलपाणिर्भविष्यामि क्रोधजस्तव पुत्रकः ॥ एवमुक्त्वा महादेवो ब्रह्माणं मुनिसत्तम ॥ ९८ ॥ अनुगृह्य च मान्देवस्तत्रैवान्तरधीयत ॥ ततःप्रभृति लोकेषु लिंगार्चा सुप्रतिष्ठिता ॥ ९९ ॥ लिंगन्तत्तु यतो ब्रह्मन् ब्रह्मणः परमं वपुः ॥ एतल्लिंगस्य माहात्म्यं भाषितं ते मयानघ ॥ १०० ॥ एतद्बुध्यन्ति योगज्ञा न देवा न च दानवाः ॥ एतद्धि परमं ज्ञानमव्यक्तं शिवसंज्ञितम् ॥ १०१ ॥ येन सूक्ष्ममचिन्त्यं तत्पश्यन्ति ज्ञानचक्षुषः ॥ तस्मै भगवते नित्यं नमस्कारं प्रकुर्म्महे ॥ १०२ ॥ महादेवाय देवाय देवदेवाय भृंगिणे ॥ नमो वेदरहस्याय नीलकण्ठाय वै नमः ॥ १०३ ॥ विभीषणाय शान्ताय स्थाणवे हेतवे नमः ॥ ब्रह्मणे वामदेवाय त्रिनेत्राय महीयसे ॥ १०४ ॥ शंकराय महेशाय गिरीशाय शिवाय च ॥ नमः कुरुष्व सततन्ध्यायस्व च महेश्वरम् ॥ १०५ ॥ संसा

१ आदिदेव इति पा०। २ पश्यतमिति पा०। ३ लोककरः प्रभुरिति पा०। ४ वामे पार्श्वे चैव इति पा०। ५ दद्मीति आर्षं, ददामीति साधु। ६ एवमुक्त्वा तु इति पा०। ७ भुवि इति पा०। ८ शिवाख्यया इति पा०। ९ अहं प्रभवतो वक्त्रादिति पा०। १० कल्पान्ते घोररूपधृगिति पा०। ११ लिङ्गं त्वन्नयनादिति पा०। १२ ज्ञानचक्षुषेति पा०। १३ रुद्राय इति पा०। १४ लिङ्गिने इति पा०। १५ योगिने- इति पा०। १६ देवदेवाय इति पा०। १७ मनसा हरमिति पा०।

रसागरादस्मादचिरादुद्धरिष्यसि ॥ एवं स वासुदेवेन व्याहृतो मुनिपुंगवः ॥ १०५ ॥ जगाम मनसा देवमीशानं विश्वतोमुखम् ॥ प्रणम्य शिरसा कृष्णमनुज्ञातो महामुनिः ॥ १०६ ॥ जगाम चेप्सितं शम्भुन्देवदेवन्त्रिशूलिनम् ॥ य इमं श्रावयेन्नित्यं लिङ्गाध्यायमनुत्तमम् ॥ ॥ १०७ ॥ शृणुयाद्वा पठेद्वापि सर्व्वपापैः प्रमुच्यते ॥ श्रुत्वा सकृदपि ह्येतत्तपश्चरणमुत्तमम् ॥ १०८ ॥ वासुदेवस्य विप्रेन्द्राः पापं मुञ्चति मानवैः ॥ जपेद्वाहरहर्नित्यं ब्रह्मलोके महीयते ॥ एवमाह महायोगी कृष्णद्वैपायनः प्रभुः ॥ १०९ ॥ इति श्रीकूर्म्मपुराणे यदुवंशानुकीर्त्तने लिंगोत्पत्तिर्नाम षड्विंशोऽध्यायः ॥ २६ ॥ अथ राजवंशानुकीर्त्तनम् ॥ सूत उवाच ॥ ततो लब्धवरः कृष्णो जाम्बवत्यां महेश्वरात् ॥ अजीजनन्महात्मानं साम्बमात्मजमुत्तमम् ॥ १ ॥ प्रद्युम्नस्य ह्यभूत्पुत्रो ह्यनिरुद्धो महाबलः ॥ तावुभौ गुणसम्पन्नौ कृष्णस्यैवापरे तनू ॥ २ ॥ हत्वा च कंसं नरकम न्यांश्च शतशोऽसुरान् ॥ विजित्य लीलया शक्रञ्जित्वा बाणं महासुरम् ॥ ३ ॥ स्थापयित्वा जगत्कृत्स्नं लोके धर्म्मांश्च शाश्वतान् ॥ चक्रे नारायणो गन्तुं स्वस्थानं बुद्धिमुत्तमाम् ॥ ४ ॥ एतस्मिन्नन्तरे विप्रा भृग्वाद्याः कृष्णमीश्वरम् ॥ आजग्मुर्द्वारकां द्रष्टुं कृतकार्य्यं सनातनम् ॥ ५ ॥ स तानु वाच विश्वात्मा प्रणिपत्याभिपूज्य च ॥ आसनेषूपविष्टान्वै सह रामेण धीमता ॥ ६ ॥ गमिष्यामि परं स्थानं स्वकीयं विष्णुसंज्ञितम् ॥ कृतानि सर्व्वकार्य्याणि प्रसीदध्वं मुनीश्वराः ॥ ७ ॥ इदं कलियुगं घोरं सम्प्राप्तमधुनाऽशुभम् ॥ भविष्यन्ति जनाः सर्वे ह्यस्मिन्पापानुवर्त्तिनः ॥ ८ ॥ प्रवर्त्तयध्वं विज्ञानमज्ञानार्थं हितावहम् ॥ येनेमे कलिजैः पापैर्मुच्यन्ते हि द्विजोत्तमाः ॥ ९ ॥ ये मां जनाः संस्मरन्ति कलौ सकृदपि प्रभुम् ॥ तेषां नश्यति तत्पापं भक्तानां पुरुषोत्तमे ॥ १० ॥ येऽर्च्चयिष्यन्ति मां भक्त्या नित्यं कलियुगे द्विजाः ॥ विधिना वेददृष्टेन ते गमिष्यन्ति तत्पदम् ॥ ॥ ११ ॥ ये ब्राह्मणा वंशजाता युष्माकं वै सहस्रशः ॥ तेषां नारायणे भक्तिर्भविष्यति कलौ युगे ॥ १२ ॥ परात्परतरं यान्ति नारायणपरा जनाः ॥ न ते तत्र गमिष्यन्ति ये द्विषन्ति महेश्वरम् ॥ १३ ॥ ध्यानं योगस्तपस्तप्तं ज्ञानं यज्ञादिको विधिः ॥ तेषां विनश्यति क्षिप्रं ये निन्दन्ति महे श्वरम् ॥ १४ ॥ यो मां समर्च्चयेन्नित्यमेकान्तं भावमाश्रितः ॥ विनिन्दन्देवमीशानं स याति नरकायुतम् ॥ १५ ॥ तस्मात्संपरिहर्तव्यो निन्दा पशुपतेर्द्विजाः ॥ कर्म्मणा मनसा वाचा मद्भक्तेष्वपि यत्नतः ॥ १६ ॥ ये च दक्षाध्वरे शप्ता दधीचेन द्विजोत्तमाः ॥ भविष्यन्ति कलौ भक्तैः परि

१ विष्णुमिति पा०। २ देशं देवदेवञ्च शूलिनमिति पा०। ३ मुञ्चन्ति मानवा इति पा०। ४ साम्बमात्मजसत्तममिति पा०। ५ लोकधर्म्मांश्च इति पा०। ६ आर्षमात्मनेपदम्। ७ वै ज्ञानं ब्रह्मणाना मिति पा०। ८ वै इति पा०। ९ नश्यतु इति पा०। १० होम इति पा०। ११ पिनाकिनमिति पा०। १२ तस्मात्सा परिहर्त्तव्या इति पा०।

हार्य्याः प्रयत्नतः ॥ १७ ॥ द्विजानो देवमीशानं युष्माकं वंशसम्भवाः ॥ शप्ताश्च गौतमेनोर्व्यां न सम्भाष्या द्विजोत्तमैः ॥ १८ ॥ एवमुक्ताश्च कृष्णेन सर्वे ते वै महर्षयः ॥ ओमित्युक्त्वा ययुस्तूर्णं स्वानि स्थानानि सत्तमाः ॥ १९ ॥ ततो नारायणः कृष्णो लीलयैव जगन्मयः ॥ संहृत्य स्वकुलं सर्वं ययौ तत्परमं पदम् ॥ २० ॥ इत्येष वः समासेन राज्ञां वंशः सुकीर्तितः ॥ न शक्यो विस्तराद्वक्तुं किं भूयः श्रोतुमिच्छथ ॥ २१ ॥ यः पठेच्छृणुयाद्वापि वंशानां कथनं शुभम् ॥ सर्वपापविनिर्मुक्तः स्वर्गलोके महीयते ॥ २२ ॥ इति श्रीकूर्म्मपुराणे राजवंशानुकीर्तनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥ अथ पार्थाय व्यासदर्शनम् ॥ ऋषय ऊचुः ॥ कृतं त्रेता द्वापरश्च कलिश्चेति चतुर्युगम् ॥ एषां प्रभावं सूताद्य कथयस्व समासतः ॥ १ ॥ सूत उवाच ॥ गते नारायणे कृष्णे स्वमेव परमं पदम् ॥ पार्थः परमधर्म्मात्मा पाण्डवः शत्रुतापनः ॥ २ ॥ कृत्वा चैवोत्तरविधिं शोकेन महतावृतः ॥ अपश्यत्पथि गच्छन्तं कृष्णद्वैपायनं मुनिम् ॥ ३ ॥ शिष्यैः प्रशिष्यैरभितः संवृतं ब्रह्मवादिनम् ॥ पपात दण्डवद्भूमौ त्यक्त्वा शोकं तदार्जुनः ॥४॥ उवाच परमप्रीत्या कस्मादेतन्महामुने ॥ इदानीं गच्छसि क्षिप्रं कं वा देशं प्रति प्रभो ॥ ५ ॥ सन्दर्शनाद्वै भवतः शोको मे विपुलो गतः ॥ इदानीं मम यत्कार्यं ब्रूहि पद्मदलेक्षण ॥६॥ तमुवाच महायोगी कृष्णद्वैपायनः स्वयम् ॥ उपविश्य नदीतीरे शिष्यैः परिवृतो मुनिः ॥ ७ ॥ इति श्रीकूर्म्मपुराणे पार्थाय व्यासदर्शनं नामाष्टाविंशोऽध्यायः ॥ २८ ॥ अथ युगवंशानुकीर्तनम् ॥ व्यास उवाच ॥ इदं कलियुगं घोरं सम्प्राप्तं पाण्डुनन्दन ॥ ततो गच्छामि देवस्य पुरीं वाराणसीं शुभाम् ॥ १ ॥ अस्मिन् कलियुगे घोरे लोकाः पापानुवर्त्तिनः ॥ भविष्यन्ति महाबाहो वर्णाश्रमविवर्जिताः ॥ २ ॥ नान्यत्पश्यामि जन्तूनां मुक्त्वा वाराणसीं पुरीम् ॥ सर्वपापोपशमनं प्रायश्चित्तं कलौ युगे ॥ ३ ॥ कृतं त्रेता द्वापरश्च सर्वेष्वेतेषु वै नराः ॥ भविष्यन्ति महात्मानो धार्म्मिकाः सत्यवादिनः ॥ ४ ॥ त्वं हि लोकेषु विख्यातो धृतिमाञ्जनवत्सलः ॥ पालयाद्य परं धर्म्मं स्वकीयं मुच्यसे भयात् ॥ ५ ॥ एवमुक्तो भगवता पार्थः परपुरञ्जयः ॥ पृष्टवान्प्रणिपत्यासौ युगधर्मान्द्विजोत्तमाः ॥ ६ ॥ तस्मै प्रोवाच सकलं मुनिः सत्यवतीसुतः ॥ प्रणम्य देवमीशानं युगधर्मान्सनातनान् ॥ ७ ॥ व्यास उवाच ॥ वक्ष्यामि ते समासेन युगधर्मान्नरेश्वर ॥ न शक्यते मया राजन्विस्तरेणाभिभाषितुम् ॥ ८ ॥ आद्यं कृतयुगं प्रोक्तं ततस्त्रेतायुगं बुधैः ॥ तृतीयं द्वापरं पार्थ चतुर्थं कलिरुच्यते ॥ ९ ॥ ध्यानं



---

१ द्विजोत्तमाः इति पा० । २ इत्येवमुक्ता इति पा० । ३ वंशोऽनुकीर्तितः इति पा० । ४ स्वभावमिति पा० । ५ परमप्रीतः इति पा० । ६ कस्माद्देशान्महामुने इति पा० । ७ गङ्गादेशमिति पा० । ८ वाराणसीं महापुरीमिति पा० । ९ महापापा इति पा० । १० त्यक्त्वा इति पा० । ११ सर्व्वपापप्रशमनमिति पा० ।

तपः[1] कृतयुगे त्रेतायां ज्ञानमु[2]च्यते ॥ द्वापरे यज्ञमेवाहुर्दानमेकं[3] कलौ युगे ॥ १० ॥ ब्रह्मा कृतयुगे देवस्त्रेतायां भगवान्रविः ॥ द्वापरे दैवतं विष्णुः कलौ देवो[4] महेश्वरः ॥ ११ ॥ ब्रह्मा विष्णुस्तथा सूर्यः सर्व एव कलावपि ॥ पूज्यन्ते भगवान्रुद्रश्चतुर्ष्वपि पिनाकधृक् ॥ १२ ॥ आद्ये कृतयुगे धर्मश्चतुष्पादः प्रकीर्त्तितः[5] ॥ त्रेतायुगे त्रिपादः स्याद्द्विपादो द्वापरे स्थितः ॥ १३ ॥ त्रिपादहीनस्तिष्ठेत्तु सत्तामात्रेण तिष्ठति ॥ कृते तु मिथुनोत्पत्तिर्वृत्तिः साक्षादलोलुपा ॥ १४ ॥ प्रजास्तृप्ताः सदा सर्वाः सर्वानन्दाश्च भोगिनः[6] ॥ अधमोत्तमत्वं नास्त्यासां निर्विशेषाः पुरञ्जय[7] ॥ १५ ॥ तुल्यमायुः सुखं रूपं तासु[8] तस्मिन् कृते युगे ॥ विशोकास्तत्त्वबहुला[9] एकान्तबहुलास्तथा ॥ १६॥ ध्याननिष्ठास्तपोनिष्ठा महादेवपरायणाः ॥ ता वै निष्कामचारिण्यो[10] नित्यं मुदितमानसाः ॥ १७॥ पर्व्वतोदधिवासिन्यो ह्यनिकेताः परन्तप ॥ रसोल्लासः कालयोगात्त्रेताख्ये[11] नश्यति द्विजाः[12] ॥ १८ ॥ तस्यां सिद्धौ प्रनष्टायामन्या सिद्धिरवर्त्तत ॥ अपां सौख्ये प्रतिहते[13] तदा मेघात्मना तु वै ॥ १९ ॥ मेघेभ्यस्तनयित्नुभ्यः प्रवृत्तं वृष्टिसर्ज्जनम् ॥ सकृदेव तया वृष्ट्या संयुक्ते[14] पृथिवीतले ॥ २० ॥ प्रादुरासंस्तथा तासां वृक्षा वै गृहसंज्ञिताः ॥ सर्वः प्रत्युपयोगस्तु तासान्तेभ्यः प्रजायते ॥ २१ ॥ वर्त्तयन्ति स्म तेभ्यस्तास्त्रेतायुगमुखे प्रजाः ॥ ततः कालेन महता तासामेव विपर्ययात्[15] ॥ २२ ॥ रागलोभात्मको[16] भावस्तदा ह्याकस्मिकोऽभवत् ॥ विपर्ययेण तासान्तु[17] तेन तत्कालभाविताः ॥ २३ ॥ प्रणश्यन्ति ततः सर्वे वृक्षास्ते गृहसंज्ञिताः ॥ ततस्तेषु प्रनष्टेषु विभ्रान्ता मैथुनोद्भवाः ॥ २४ ॥ अभिध्यायन्ति तां सिद्धिं सत्याभिध्यानतस्तदा[18] ॥ प्रादुर्बभूवुस्तासान्तु वृक्षास्ते गृहसंज्ञिताः ॥ २५ ॥ वस्त्राणि ते प्रसूयन्ते फलान्याभरणानि च ॥ तेष्वेव जायते तासां गन्धवर्णरसान्वितम् ॥ २६ ॥ अमाक्षिकं महावीर्यं पुटके पुटके मधु ॥ तेन ताः कर्त्तयन्ति स्म त्रेतायुगमुखे प्रजाः ॥ २७ ॥ हृष्टास्तुष्टास्तया सिद्ध्या सर्व्वा वै विगतज्वराः ॥ पुनः[19] कालान्तरेणैव ततो[20] लोभावृतास्तदा ॥ २८ ॥ वृक्षांस्तान् पर्य्यगृह्णन्त मधु वा माक्षिकं बलात् ॥ तासान्तेनापचारेण पुनर्लोभकृतेन वै ॥ २९ ॥ प्रनष्टा मधुना सार्द्धं कल्पवृक्षाः क्वचित् क्वचित् ॥ शीतवर्षातपैस्तीव्रैस्तास्ततो[21][22] दुःखिता भृशम् ॥ ३० ॥ द्वन्द्वैः संपीड्यमानास्तु चक्रुरावरणानि

---

१ परमिति पा० । २ ज्ञानमध्वर इति पा० । ३ दानमेव इति पा० । ४ रुद्र इति पा० । ५ सनातन इति पा० । ६ भोगिन्य इति वक्तव्ये भोगिन इति आर्षम् । ७ सदानन्दाः पुरन्ध्रय इति पा० । ८ तासामिति पा० । ९ सत्त्वबहुला इति पा० । १० भावेन कामचारिण्य इति पा०। ११ आलस्यात्कालयोगाच्च इति, रसोल्लासः कलायोगादिति पा०। १२ नश्यते तत इति पा०। १३ प्रतिगते इति पा०। १४ संपृक्ते इति पा० । १५ विपर्य्यये इति पा० । १६ भोगात्मक इति पा० । १७ नाशाच्च इति पा० । १८ सत्याभिध्यायिन इति पा० । १९ तत इति पा० । २० पुनरिति पा० । २१ तीक्ष्णैरिति पा० । २२ ततस्ता इति पा० ।

च ॥ कृत्वा द्वन्द्वविनिर्घातान्[1] वार्त्तोपायमचिन्तयन् ॥ ३१ ॥ नष्टेषु मधुना सार्द्धं कल्पवृक्षेषु वै तदा ॥ ततः प्रादुरभूत्तासां[2] सिद्धिस्त्रेतायुगे पुनः ॥ ॥ ३२ ॥ वार्त्तायाः साधिका ह्यन्या वृष्टिस्तासान्निकामतः ॥ तासां वृष्ट्युदकानीह यानि निम्नैर्गतानि तु ॥ ३३ ॥ अभवन्[3] वृष्टिसन्तत्या स्रोतः स्थानानि निम्नगाः ॥ यदा आपो बहुतरा[4] आपन्नाः पृथिवीतले ॥ ३४ ॥ अपाम्भूमेश्च संयोगादौषध्यस्तास्तदाभवन् ॥ अफालकृष्टाश्चानुप्ता ग्राम्यारण्याश्चतुर्दश ॥ ३५ ॥ ऋतुपुष्पफलैश्चैव वृक्षगुल्माश्च जज्ञिरे ॥ ततः प्रादुरभूत्तासां रागो लोभश्च सर्व्वशः ॥ ३६ ॥ अवश्यम्भावितार्थेन[5] त्रेतायुगवशेन वै ॥ ततस्ताः पर्य्यगृह्णन्त नदीक्षेत्राणि पर्व्वतान् ॥३७॥ वृक्षगुल्मौषधीश्चैव प्रसह्य तु यथाबलम् ॥ विपर्य्ययेण तासान्ता ओषध्यो विविशुर्म्महीम् ॥ ३८ ॥ पितामहनियोगेन दुदोह पृथिवीं पृथुः ॥ ततस्ता जगृहुः सर्व्वा ह्यन्योन्यं क्रोधमूर्च्छिताः[6] ॥ ३९ ॥ सदाचारे विनष्टे तु बलात्कालबलेन च ॥ मर्य्यादायाः प्रतिष्ठार्थं[7] ज्ञात्वैतद्भगवानजः ॥ ४० ॥ ससर्ज क्षत्रियान्ब्रह्मा ब्राह्मणानां हिताय वै ॥ वर्णाश्रमव्यवस्थाश्च त्रेतायां कृतवान्प्रभुः ॥ ४१ ॥ यज्ञप्रवर्तनञ्चैव पशुहिंसाविवर्ज्जितम् ॥ द्वापरेऽप्यथ विद्यन्ते मतिभेदास्तथा नृणाम्[8] ॥ ४२ ॥ रागो लोभस्तथा युद्धं मत्वा बुद्धिविनिश्चयम् ॥ एको वेदश्चतुष्पादस्त्रिधा त्विह विभाव्यते[9] ॥ ४३ ॥ वेदव्यासैश्चतुर्द्धा च न्यस्यते द्वापरादिषु ॥ ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः ॥ ४४ ॥ मन्त्रब्राह्मणविन्यासैः स्वरवर्णविपर्ययैः ॥ संहिता ऋग्यजुःसाम्नां प्रोच्यन्ते परमर्षिभिः[10] ॥ ४५ ॥ सामान्योद्भावना[11] चैवं दृष्टिभेदैः क्वचित्क्वचित् ॥ ब्राह्मणं कल्पसूत्राणि ब्रह्मप्रवचनानि च ॥ ४६ ॥ इतिहासपुराणानि धर्म्मशास्त्राणि सुव्रत ॥ अवृष्टिर्मरणञ्चैव तथैवान्ये ह्युपद्रवाः[12] ॥४७॥ वाङ्मनःकायजैर्दोषै[13] र्निर्वेदो जायते नृणाम् ॥ निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा ॥ ४८ ॥ विचारणाच्च वैराग्यं वैराग्याद्दोषदर्शनम् ॥ दोषाणां दर्शनाच्चैव द्वापरे ज्ञानसम्भवः ॥ ४९ ॥ एषा रजस्तमोयुक्ता वृत्तिर्वै द्वापरे द्विजाः ॥ आद्ये कृते तु धर्म्मोऽस्ति स त्रेतायां प्रवर्त्तते ॥५०॥ द्वापरे व्याकुलीभूत्वा[14] प्रणश्यति कलौ युगे ॥५१॥ इति श्रीकूर्म्मपुराणे युगवंशानुकीर्त्तनं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ अथ व्यासार्ज्जुनसंवादे युगधर्मनिरूपणम् ॥व्यास उवाच॥तिष्ये मायामसूयाञ्च वधश्चैव[15] तपस्विनाम्॥साधयन्ति नरा नित्यं तमसा व्याकुलीकृताः॥१॥



---

१ द्वन्द्वमतीकारानिति; मतीघातानिति पा० । २ प्रादुर्बभूवाथेति पा० । ३ अवहन्निति पा० । ४ ये पुनस्तदर्पा स्तोका इति पा० । ५ नाशाच्च इति पा० । ६ आप्तदारधनाद्यास्तु इति पा० । ७ प्रतिष्ठानमिति पा० । ८ तत्त्वानामविनिश्चय इति पा० । ९ एको देवश्चतुष्पादस्त्रेतास्विह विधीयते इति पा० । १० संहन्यन्ते श्रुतर्षिभिरिति पा० । ११ सामान्याद्वैकृताश्चैव इति पा० । १२ तथैव व्याध्युपद्रवा इति पा० । १३ दुःखैरिति पा० । १४ व्याकुलीभूय इति साधु । १५ द्वयश्चैव इति पा० ।

कलौ प्रमारको रोगः सततं क्षुद्भयन्तथा ॥ अनावृष्टिभयं घोरं देशानाञ्च विपर्य्ययः ॥ २ ॥ अधार्म्मिका निराहारां महाकोपाल्पतेजसः ॥ अनृतं ब्रुवते लुब्धास्तिष्ये जाताः सुदुष्प्रजाः ॥ ३ ॥ दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ॥ विप्राणां कर्म्मदोषैश्च प्रजानां जायते भयम् ॥ ४ ॥ नाधीयते तदा वेदान् न यजन्ति द्विजातयः ॥ यजन्ति यज्ञान्वेदांश्च पठन्ते चाल्पबुद्धयः ॥ ५ ॥ शूद्राणां मन्त्रयोगैश्च सम्बन्धो ब्राह्मणैः सह ॥ भविष्यति कलौ तस्मिञ्छयनासनभोजनैः ॥ ६ ॥ राजानः शूद्रभूयिष्ठा ब्राह्मणान्बाधयन्ति च ॥ भ्रूणहत्या वीरहत्या प्रजायेत नरेश्वरे ॥ ७ ॥ स्नानं होमं जपं दानं देवतानां तथार्चनम् ॥ तथान्यानि च कर्म्माणि न कुर्व्वन्ति द्विजातयः ॥ ८ ॥ विनिन्दन्ति महादेवं ब्राह्मणान् पुरुषोत्तमम् ॥ आम्नायधर्म्मशास्त्राणि पुराणानि कलौ युगे ॥ ९ ॥ कुर्व्वन्त्यवेददृष्टानि कर्म्माणि विविधानि तु ॥ स्वधर्म्मे तु रुचिर्नैव ब्राह्मणानां प्रजायते ॥ १० ॥ कुशीलचर्य्याः पाषण्डैर्वृथारूपैः समावृताः ॥ बहुयाचनका लोका भविष्यन्ति परस्परम् ॥ ११॥ अट्टशूला जनपदाः शिवशूलाश्चतुष्पथाः ॥ प्रमदाः केशशूलाश्च भविष्यन्ति कलौ युगे ॥ १२ ॥ शुक्लदन्ताजिनाख्याश्च मुण्डाः काषायवाससः ॥ शूद्रा धर्म्मञ्चरिष्यन्ति युगान्ते समुपस्थिते ॥ १३ ॥ शस्यचौरा भविष्यन्ति तथा चेलाभिमर्शिनः ॥ चौराच्चौराश्च हर्त्तारो हर्त्तुर्हन्ता तथापरः ॥ १४ ॥ दुःखप्रचुरमल्पायुर्देहोत्सादः सरोगता ॥ अधर्म्माभिनिवेशत्वात्तमो वृत्तं कलौ स्मृतम् ॥१५॥ काषायिणोऽथ निर्ग्रन्थास्तथा कापालिकाश्च ये ॥ वेदविक्रयिणश्चान्ये तीर्थविक्रयिणः परे॥१६॥ आसनस्थान्द्विजान्दृष्ट्वा चालयन्त्यल्पबुद्धयः ॥ ताडयन्ति द्विजेन्द्रांश्च शूद्रा राजोपजीविनः ॥ १७ ॥ उच्चासनस्थाः शूद्रांश्च द्विजमध्ये परन्तप ॥ द्विजामानकरो राजा कलौ कालबलेन तु ॥ १८ ॥ पुष्पैश्च भूषणैश्चैव तथान्यैर्म्मङ्गलैर्द्विजाः ॥ शूद्रान्परिचरन्त्यल्पश्रुतभाग्यबलान्विताः ॥ १९ ॥ न प्रेक्षन्तेऽर्च्चितांश्चापि शूद्रान्द्विजवरान्नृप ॥ सेवावसरमालोक्य द्वारे तिष्ठन्ति च द्विजाः ॥ २० ॥ वाहनस्थान्समावृत्य शूद्राञ्छूद्रोपजीविनः ॥ सेवन्ते ब्राह्मणास्तांस्तु स्तुवन्ति स्तुतिभिः कलौ ॥ २१ ॥ अध्यापयन्ति वै वेदाञ्छूद्राञ्छूद्रोपजीविनः ॥ एवं निर्वेदकानर्थान्नास्तिक्यं घोरमाश्रिताः ॥ २२ ॥ तपोयज्ञकलानान्तु विक्रेतारो द्विजोत्तमाः ॥ यतयश्च भविष्यन्ति शतशोऽथ सहस्रशः ॥ २३ ॥ नाशयन्तः स्वकान्धर्म्मानधिगच्छन्ति

---

१ नाधीयन्ते कलौ वेदा इति पा० । २ यजन्त्यन्यायतो वेदानिति, जपन्त्यन्यायतोवेदानिति पा० । ३ मन्त्रमौनैश्च इति पा० । ४ स जायेत नरेश्वर इति पा० । ५ अन्यानि चैव इति पा० । ६ सर्व्वे इति पा० । ७ स्मृतिशास्त्राणीति पा० । ८ चौराश्चौरस्य इति पा० । ९ मनुरताल्पायुरिति पा० । १० शूद्रास्तु इति पा० । ११ ज्ञात्वा न हिंसिते इति पा० । १२ हसितैश्चैव इति पा० । १३ शूद्रानभ्यर्चयन्त्यल्प इति पा० । १४ श्रुतिभिरिति पा० । १५ नाशयन्ति ह्यधीतानि इति पा० ।

तत्पदम् ॥ गायन्ति लौकिकैर्गानैर्दैवतानि नराधिप ॥२४॥ वामपाशुपताचारास्तथा वै पाञ्चरात्रिकाः ॥ भविष्यन्ति कलौ तस्मिन्ब्राह्मणाः क्षत्रियास्तथा ॥२५॥ ज्ञाने कर्म्मण्यपगते लोके निष्क्रियतां गते ॥ कीटमूषिकसर्पाश्च धर्षयिष्यन्ति मानुषान् ॥२६॥ कुर्वन्ति चावताराणि ब्राह्मणानां कुलेषु वै ॥ देवीशापविनिर्दग्धाः पुरा दक्षाध्वरे द्विजाः ॥२७॥ निन्दन्ति च महादेवं तमसाविष्टचेतसः ॥ वृथा धर्म्मञ्चरिष्यन्ति कलौ तस्मिन्युगान्तिके ॥ ॥ २८ ॥ सर्वे वीरा भविष्यन्ति ब्राह्मणाद्याः स्वजातिषु ॥ ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः ॥ २९ ॥ सर्व्वे तेऽवतरिष्यन्ति ब्राह्मणास्तासु योनिषु विनिन्दन्ति हृषीकेशं ब्राह्मणा ब्रह्मवादिनः ॥ ३० ॥ वेदबाह्यव्रताचारा दुराचारा वृथाश्रमाः ॥ मोहयन्ति जनान् सर्व्वान्दर्शयित्वा फलानि च ॥ ३१ ॥ तमसाविष्टमनसो वैडालव्रतिकाधमाः ॥ कलौ रुद्रो महादेवो लोकानामीश्वरः परः ॥ ३२ ॥ तदेव साधयेन्नृणां देवतानाञ्च दैवतम् ॥ करिष्यत्यवताराणि शंकरो नीललोहितः ॥ ३३ ॥ श्रौतस्मार्त्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ उपदेक्ष्यति तज्ज्ञानं शिष्याणां ब्रह्मसंज्ञितम् ॥ ३४ ॥ सर्व्ववेदान्तसारं हि धर्म्मान्वेदनिदर्शितान् ॥ सर्ववर्णान् समुद्दिश्य स्वधर्मा ये निदर्शिताः ॥ ३५ ॥ ये तत्प्रीतां निषेवन्ते येन केनोपचारतः ॥ विजित्य कलिजान्दोषान्यान्ति ते परमम्पदम् ॥ ३६ ॥ अनायासेन सुमहत्पुण्यमाप्नोति मानवः ॥ अनेकदोषदुष्टस्य कलेरेको महान् गुणः ॥ ३७ ॥ तस्मात्सर्व्वप्रयत्नेन प्राप्य माहेश्वरं युगम् ॥ विशेषाद्ब्राह्मणो रुद्रमीशानं शरणं व्रजेत् ॥ ३८ ॥ ये नमन्ति विरूपाक्षमीशानं कृत्तिवाससम् ॥ प्रसन्नचेतसो रुद्रं ते यान्ति परमम्पदम् ॥ ३९ ॥ यथा रुद्रनमस्कारः सर्व्वकामफलो ध्रुवः ॥ अन्यदेवनमस्कारान्न तत्फलमवाप्नुयात् ॥ ४० ॥ एवंविधे कलियुगे दोषाणामेव शोधनम् ॥ महादेवनमस्कारो ध्यानं दानमिति श्रुतिः ॥ ४१ ॥ तस्मादनीश्वरानन्यान्त्यक्त्वा देवं महेश्वरम् ॥ समाश्रयेद्विरूपाक्षं यदीच्छेत्परमम्पदम् ॥ ४२॥ नार्चयन्तीह ये रुद्रं शिवं त्रिदशवन्दितम् ॥ तेषां दानं तपो यज्ञो वृथा जीवितमेव च ॥ ४३ ॥ नमो रुद्राय महते देवदेवाय शूलिने ॥ त्र्यम्बकाय त्रिनेत्राय योगिनां गुरवे नमः ॥ ४४ ॥ नमोऽस्तु देवदेवाय महादेवाय वेधसे ॥ शम्भवे स्थाणवे नित्यं शिवाय परमेष्ठिने ॥ ४५ ॥ नमः सोमाय रुद्राय महाग्रासाय हेतवे ॥ प्रपद्येऽहं विरूपाक्षं शरण्यं ब्रह्मचारिणम् ॥ ४६ ॥ महादेवं

१ चानघ इति पा० । २ वामाः इति पा० । ३ ज्ञान इति पा० । ४ मानवानिति पा० । ५ दधीचशापनिर्दग्धाः इति पा० । ६ ते च भविष्यन्तीति पा० । ७ न देवता भवेन्नृणामिति पा० । ८ क्लीबत्वमार्षम् । ९ निदर्शनानिति पा० । १० ये विमास्तानिति पा० । ११ यान्ति ते इति पा० । १२ दानं परा गतिरिति पा० । १३ तस्मादधीश्वरानन्यानिति पा० । १४ वामदेवाय इति पा० । १५ महात्रासोभिहेतवे इति पा० ।

महायोगमीशानश्चांविकापतिम् ॥ योगिनां योगदातारं योगमायासमावृतम् ॥ ४७ ॥ योगिनां गुरुमाचार्य्यं[1] योगिगम्यम्पिनाकिनम् ॥
संसारतारणं रुद्रं ब्रह्माणं ब्रह्मणोऽधिपम् ॥ ४८ ॥ शाश्वतं सर्व्वगं शान्तं ब्रह्मण्यं ब्राह्मणप्रियम् ॥ कपर्द्दिनं कालमूर्त्तिममूर्त्तिम्परमेश्वरम्[2] ॥४९॥
एकमूर्त्तिं महामूर्त्तिं वेदवेद्यन्दिवस्पतिम् ॥ नीलकण्ठं विश्वमूर्त्तिं व्यापिनं विश्वरेतसम्[3] ॥ ५० ॥ कालाग्निङ्कालदहनं कामदङ्कामनाशनम् ॥
नमस्ये[4] गिरिशं देवं चन्द्रावयवभूषणम्[5] ॥ ५१ ॥ विलोहितं लेलिहानमादित्यम्परमेष्ठिनम् ॥ उग्रम्पशुपतिं भीमं भास्करं परमन्तपः[6] ॥ ५२ ॥
इत्येतल्लक्षणं प्रोक्तं युगानां वै समासतः ॥ अतीतानागतानां वै यावन्मन्वन्तरक्षयः ॥ ५३ ॥ मन्वन्तरेण चैकेन सर्व्वाण्येवान्तराणि वै ॥ व्याख्या
तानि न सन्देहः कल्पः कल्पेन चैव[7] हि ॥ ५४ ॥ मन्वन्तरेषु चैतेषु अतीतानागतेषु वै ॥ तुल्याभिमानिनः सर्व्वे नामरूपैर्भवन्त्युत ॥ ५५ ॥
एवमुक्तो भगवता किरीटी श्वेतवाहनः ॥ बभार परमां भक्तिमीशानेऽव्यभिचारिणीम् ॥ ५६ ॥ नमश्चकार तमृषिं कृष्णद्वैपायनं प्रभुम् ॥ सर्व्वज्ञं
सर्व्वकर्त्तारं साक्षाद्विष्णुं व्यवस्थितम् ॥ ५७ ॥ तमुवाच पुनर्व्यासः पार्थं परपुरञ्जयम् ॥ कराभ्यां सुशुभाभ्याञ्च संस्पृश्य प्रणतं मुनिः ॥ ५८ ॥
धन्योऽस्यनुगृहीतोऽसि[8] त्वादृशोऽन्यो न विद्यते ॥ त्रैलोक्ये शङ्करे नूनं भक्तः परपुरञ्जयः ॥ ५९ ॥ दृष्टवानासि तन्देवं विश्वाक्षं विश्वतोमुखम् ॥
प्रत्यक्षमेव सर्व्वेषां[9] रुद्रं सर्व्वजगन्मयम्[10] ॥ ६० ॥ ज्ञानं तदैश्वरं[11] दिव्यं यथावद्विदितं त्वया ॥ स्वयमेव हृषीकेशः[12] प्रीत्योवाच सनातनः ॥ ६१ ॥
गच्छ गच्छ स्वकं स्थानं न शोकं कर्त्तुमर्हसि ॥ व्रजस्व परया भक्त्या शरण्यं शरणं शिवम् ॥ ६२ ॥ एवमुक्त्वा स भगवाननुगृह्यार्जुनं प्रभुः[13] ॥
जगाम शङ्करपुरीं समाराधयितुं भवम्[14] ॥६३॥ पाण्डवेयोऽपि[15] तद्वाक्यात्संप्राप्य शरणं शिवम् ॥ सन्त्यज्य सर्व्वकर्म्माणि ज्ञात्वा तत्परमोऽभवत्[16] ॥
॥ ६४ ॥ नार्चनेन समः शम्भोर्भक्त्या भूतो भविष्यति ॥ मुक्त्वा सत्यवतीसूनुं कृष्णं वा देवकीसुतम् ॥ ६५ ॥ तस्मै भगवते नित्यं नमः शान्ताय

---

१ परमांचार्य्यमिति पा० । २ ममरेश्वरमिति पा० । ३ विश्वचेतसमिति पा० । ४ नमस्ये—नमस्करोमि । आर्षमात्मनेपदम् । ५ भूषितमिति पा० । ६ तमसः परमिति पा० । ७ कल्पे तथैव हि इति पा० । ८ धन्योऽस्म्यनुगृहीतोऽस्मीति पा० । ९ सर्व्वेशमिति पा० । १० सर्व्वजगद्धरमिति पा० । ११ तच्चैश्वरमिति पा० । १२ हृषीकाणामिन्द्रियाणामीशः जितेन्द्रिय इत्यर्थः, सनातनः चिरजीवी, व्यासइत्यर्थः । अथवा हृषीकेशस्य अवतारत्वाद्व्यासो हृषीकेश इत्युक्तः, तथाच "व्यासो नारायणः स्वयम्" इति । गुडाकेशमिति पा० । १३ मतीति पा० । १४ हरमिति पा० । १५ पाण्डवोऽपि च इति पा० १६ तद्भक्तिपरमोऽभवदिति पा० ।

धीमते ॥ पाराशर्य्याय मुनये व्यासायामिततेजसे ॥ ६६ ॥ कृष्णद्वैपायनः साक्षाद्विष्णुरेव सनातनः ॥ को ह्यन्यस्तत्त्वतो रुद्रं वेत्ति तं परमेश्वरम् ॥ ॥ ६७ ॥ नमः कुरुध्वं तमृषिं कृष्णं सत्यवतीसुतम् ॥ पाराशर्य्यं महात्मानं योगिनं विष्णुमव्ययम् ॥ ६८ ॥ एवमुक्त्वा तु मुनयः सर्व्वे एव समाहिताः ॥ प्रणेमुस्तं महात्मानं व्यासं सत्यवतीसुतम् ॥६९॥ इति श्रीकूर्म्मपुराणे व्यासार्जुनसंवादे युगधर्मनिरूपणंनाम त्रिंशोऽध्यायः॥३०॥

अथ वाराणशीमाहात्म्यम् ॥ ऋषय ऊचुः ॥ प्राप्य वाराणसीन्दिव्यां कृष्णद्वैपायनो मुनिः ॥ किमकार्षीन्महाबुद्धिः श्रोतुं कौतूहलं हि नः ॥ १ ॥ सूत उवाच ॥ प्राप्य वाराणसीन्दिव्यामुपस्पृश्य महामुनिः ॥ पूजयामास जाह्नव्यां देवं विश्वेश्वरं शिवम् ॥ २ ॥ तमागतं मुनिं दृष्ट्वा तत्र ये निवसन्ति वै ॥ पूजयाञ्चक्रिरे व्यासं मुनयो मुनिपुङ्गवम् ॥ ३ ॥ पप्रच्छुः प्रणताः सर्व्वे कथां पापप्रणाशिनीम् ॥ महादेवाश्रयाम्पुण्यां मोक्षधर्म्मान्सनातनान् ॥ ४ ॥ स चापि कथयामास सर्व्वज्ञो भगवानृषिः ॥ माहात्म्यं देवदेवस्य धर्म्म्यं वेदनिदर्शनात् ॥ ५ ॥ तेषां मध्ये मुनीन्द्राणां व्यासशिष्यो महामुनिः ॥ पृष्टवाञ्जैमिनिर्व्यासं गूढमर्थं सनातनम् ॥ ६ ॥ जैमिनिरुवाच ॥ भगवन् संशयञ्चैकं छेत्तुमर्हसि सर्व्ववित् ॥ न विद्यते ह्यविदितं भवतः परमर्षिणः ॥ ७ ॥ केचिद्ध्यानं प्रशंसन्ति धर्म्ममेवापरे जनाः ॥ अन्ये साङ्ख्यं तथा योगं तपश्चान्ये महर्षयः ॥ ८ ॥ ब्रह्मचर्य्यमथो नूनमन्ये प्राहुर्म्महर्षयः ॥ अहिंसां सत्यमप्यन्ये सन्यासमपरे विदुः ॥ ९ ॥ केचिद्दयां प्रशंसन्ति दानमध्ययनं तथा ॥ तीर्थयात्रां तथा केचिदन्ये चेन्द्रियनिग्रहम् ॥ १० ॥ किमेषाञ्च भवेच्छ्रेयः प्रब्रूहि मुनिपुङ्गव ॥ यदि वा विद्यतेऽप्यन्यद्गुह्यं तद्वक्तुमर्हसि ॥ ११ ॥ श्रुत्वा स जैमिनेर्वाक्यं कृष्णद्वैपायनो मुनिः ॥ प्राह गम्भीरया वाचा प्रणम्य वृषकेतनम् ॥ १२ ॥ श्रीभगवानुवाच ॥ साधु साधु महाभाग यत्पृष्टं भवता मुने॥ वक्ष्ये गुह्यतमाद्गुह्यं शृण्वन्त्यन्ये महर्षयः॥१३॥ ईश्वरेण पुरा प्रोक्तं ज्ञानमेतत्सनातनम् ॥ गूढमप्राज्ञविद्विष्टं सेवितं सूक्ष्मदर्शिभिः ॥१४॥ नाश्रद्दधाने दातव्यं नाभक्ते परमेष्ठिनः ॥ नावेदविदुषे देयं ज्ञानानां ज्ञानमुत्तमम् ॥ १५ ॥ मेरुशृङ्गे महादेवमीशानं त्रिपुरद्विषम् ॥ देवासनगता देवी महादेवमपृच्छत ॥ १६ ॥ श्रीदेव्युवाच ॥ देवदेव महादेव भक्तानामार्त्तिनाशन ॥ कथन्त्वां पुरुषो देवमचिरादेव पश्यति ॥ १७ ॥ साङ्ख्ययोगंस्तपो ध्यानं कर्म्मयोगश्च वैदिकः ॥ आयासबहुलान्याहुर्यानि चान्यानि शङ्कर ॥ १८ ॥ येन विभ्रान्तचित्तानां विज्ञानां योगिनामपि ॥

१ नमामि रुद्रमिति पा॰ । २ कथाः पापविनाशिनीरिति पा॰ । ३ धर्म्मान्वेदनिदर्शितानिति पा॰ । ४ तत्त्वविदिति पा॰ । ५ तपस्त्वन्ये इति पा॰ । ६ मौनमन्ये इति पा॰ । ७ किमेतेषामिति पा॰ । ८ न वेदविदुषे ज्ञेयमिति पा॰ । ९ तथा इति पा॰ । १० योगोऽथ इति पा॰ । ११ योगिनां कर्म्मिणामपीति, स्वकर्म्मकर्म्मिणामपीति पा॰ ।

हश्यो हि भगवान्सूक्ष्मः सर्व्वेषामपि देहिनाम् ॥ १९ ॥ एतद्गुह्यतमं ज्ञानं गूढं ब्रह्मादिसेवितम् ॥ हिताय सर्वभक्तानां ब्रूहि कामाङ्गनाशन ॥ ॥ २० ॥ ईश्वर उवाच ॥ अवाच्यमेतद्गूढार्थं ज्ञानमज्ञैर्बहिष्कृतम् ॥ वक्ष्ये तव यथातत्त्वं यदुक्तं परमर्षिभिः ॥ २१ ॥ परं गुह्यतमं क्षेत्रं मम वाराणसी पुरी ॥ सर्वेषामेव भूतानां संसारार्णवतारिणी ॥ २२ ॥ तस्मिन् भक्ता महादेवि मदीयं व्रतमास्थिताः ॥ निवसन्ति महात्मानः परं नियममास्थिताः ॥ २३ ॥ उत्तमं सर्वतीर्थानां स्थानानामुत्तमञ्च यत् ॥ ज्ञानानामुत्तमं ज्ञानमविमुक्तं परं मम ॥ ॥ २४ ॥ स्थानान्तरे पवित्राणि तीर्थान्यायतनानि च ॥ श्मशाने संस्थितान्येव दिवि भूमिगतनानि च ॥ २५ ॥ भूर्लोके नैव संलग्नमन्तरिक्षे ममालयम् ॥ अविमुक्ता न पश्यन्ति मुक्ताः पश्यन्ति चेतसा ॥ २६ ॥ श्मशानमेतद्विख्यातमविमुक्तमिति स्मृतम् ॥ कालो भूत्वा जगदिदं संहराम्यत्र सुन्दरि ॥ २७ ॥ देवीदं सर्वगुह्यानां स्थानं प्रियतमं मम ॥ मद्भक्ता यत्र गच्छन्ति मामेव प्रविशन्ति ते ॥ २८ ॥ दत्तं जप्तं हुतञ्चेष्टं तपस्तप्तं कृतञ्च यत् ॥ ध्यानमध्ययनं ज्ञानं सर्वं तत्राक्षयं भवेत् ॥ २९ ॥ जन्मान्तरसहस्रेषु यत्पापं पूर्वसञ्चितम् ॥ अविमुक्ते प्रविष्टस्य तत्सर्वं व्रजति क्षयम् ॥ ३० ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये वर्णसङ्कराः ॥ स्त्रियो म्लेच्छाश्च ये चान्ये सङ्कीर्णाः पापयोनयः ॥ ३१ ॥ कीटाः पिपीलिकाश्चैव ये चान्ये मृगपक्षिणः ॥ कालेन निधनं प्राप्ता अविमुक्ते वरानने ॥ ३२ ॥ चन्द्रार्द्धमौलयस्त्र्यक्षा महावृषभवाहनाः ॥ शिवे मम पुरे देवि जायन्ते तत्र मानवाः ॥ ३३ ॥ नाविमुक्ते मृतः कश्चिन्नरकं याति किल्बिषी ॥ ईश्वरानुगृहीता हि सर्व्वे यान्ति परां गतिम् ॥ ३४ ॥ मोक्षं सुदुर्लभं ज्ञात्वा संसारञ्चातिभीषणम् ॥ अश्मना चरणौ हत्वा वाराणस्यां वसेन्नरः ॥ ३५ ॥ दुर्लभा तपसोऽवातिर्मृतस्य परमेश्वरि ॥ यत्र तत्र विपन्नस्य गतिः संसारमोक्षणी ॥ ३६ ॥ प्रसादाद्दह्यते ह्येनो मम शैलेन्द्रनन्दिनि ॥ अत्राबुधा न पश्यन्ति मम मायाविमोहिताः ॥ ३७ ॥ अविमुक्तं न पश्यन्ति मूढा ये तमसावृताः ॥ विण्मूत्ररेतसां मध्ये संविशन्ति पुनः पुनः ॥ ३८ ॥ हन्यमानोऽपि यो देवि विशेद्विघ्नशतैरपि ॥ स याति परमं स्थानं यत्र गत्वा न शोचति ॥ ३९ ॥ जन्ममृत्युजरामुक्तं परं याति शिवालयम् ॥ अपुनर्मरणानां हि सा गतिर्मोक्षकाङ्क्षिणाम् ॥ ॥ ४० ॥ यां प्राप्य कृतकृत्यः स्यादिति मन्येत पण्डितः ॥ न दानैर्न तपोभिश्च न यज्ञैर्नापि विद्यया ॥ ४१ ॥ प्राप्यते गतिरुत्कृष्टा या विमुक्ते

---

१ विज्ञानमिति पा० । २ तत्र इति पा० । ३ तदिति पा० । ४ दिव्येति पा० । ५ श्रुतमिति पा० । ६ तत्र इति पा० । ७ सङ्कीर्णाः—अनुलोमप्रतिलोमाभ्यां सङ्करजातीया इत्यर्थः । ८ मत्वा इति पा० । ९ तपसा चापि पूतस्य इति पा० । १० जायते ह्येतदिति पा० । ११ अपि इति, अविद्वांस इति पा० । १२ सेवन्ते इति पा० । १३ विद्वानिनि, पुमान्देवि विद्वानिति पा० । १४ मन्यन्ति पण्डिता इति पा० ।

58

तु लभ्यते ॥ नानावर्णा विवर्णाश्च चण्डालाद्या जुगुप्सिताः ॥ ४२ ॥ किल्विषैः पूर्णदेहा ये प्रकृष्टैस्तापकैस्तथा[1] ॥ भेषजम्परमं तेषामविमुक्तं विदुर्बुधाः ॥ ४३ ॥ अविमुक्तं परं ज्ञानमविमुक्तं परं पदम् ॥ अविमुक्तं परन्तत्त्वमविमुक्तं परं शिवम् ॥ ४४ ॥ कृत्वा वै नैष्ठिकीन्दीक्षामविमुक्ते वसन्ति ये ॥ तेषां तत्परमं ज्ञानं ददाम्यन्ते परं पदम् ॥ ४५ ॥ प्रयागं नैमिषं पुण्यं श्रीशैलोऽथ हिमालयः ॥ केदारं भद्रकर्णञ्च गया पुष्करमेव च ॥ ४६ ॥ कुरुक्षेत्रं रुद्रकोटिर्नर्मदा हाटकेश्वरम् ॥ शालिग्रामञ्च पुष्पाग्रं वंशं कोकामुखं तथा ॥ ४७ ॥ प्रभासं विजयेशानं गोकर्णं शङ्कुकर्णकम् ॥ एतानि पुण्यस्थानानि त्रैलोक्ये विश्रुतानि च ॥ ४८ ॥ यास्यन्ति परमं[2] मोक्षं वाराणस्यां यथा मृताः ॥ वाराणस्यां विशेषेण गङ्गा त्रिपथगामिनी ॥ ४९ ॥ प्रविष्टा[3] नाशयेत्पापं जन्मान्तरशतैः कृतम् ॥ अन्यत्र सुलभा गङ्गा श्राद्धं दानं तथा[4] जपः ॥ ५० ॥ व्रतानि सर्व्वमेवैतद्वाराणस्यां सुदुर्लभम् ॥ यजेत्तु जुहुयान्नित्यं ददात्यर्च्चयतेऽपरान्[5] ॥ ५१ ॥ वायुभक्षश्च सततं वाराणस्यां स्थितो नरः ॥ यदि पापो यदि शठो यदि चाधार्म्मिको[6] नरः ॥ ५२ ॥ वाराणसीं समासाद्य पुनाति स कुलत्रयम्[7] ॥ वाराणस्यां महादेवं ये स्तुवन्त्यर्च्चयन्ति च[8] ॥ ५३ ॥ सर्व्वपापविनिर्मुक्तास्ते विज्ञेया गणेश्वराः॥अन्यत्र योगाज्ज्ञानाद्वा सन्न्यासादथवान्यतः ॥५४॥ प्राप्यते तत्परं[9] स्थानं सहस्रेणैव जन्मना॥ ये भक्ता[10] देवदेवेशे वाराणस्यां वसन्ति वै ॥५५॥ ते विन्दन्ति परं मोक्षमेकेनैव तु जन्मना ॥ यत्र योगस्तथा ज्ञानं मुक्तिरेकेन जन्मना ॥ ५६ ॥ अविमुक्तं समासाद्य नान्यद्गच्छेत्तपोवनम्॥यतो मया न मुक्तन्तदविमुक्तमिति स्मृतम्॥५७॥तदेव गुह्यं गुह्यानामेतद्विज्ञाय मुच्यते[11] ॥ ज्ञानध्याननिविष्टानां[12] परमानन्दमिच्छताम्॥५८॥ या गतिर्विहिता सुभ्रु साविमुक्ते मृतस्य[13] तु॥ यानि कान्यविमुक्तानि देवैरुक्तानि नित्यशः ॥५९॥ पुरी वाराणसी तेभ्यः स्थानेभ्योऽप्यधिका शुभा ॥ यत्र साक्षान्महादेवो देहान्तेऽक्षय्यमीश्वरः[14] ॥ ६० ॥ व्याचष्टे तारकं ब्रह्म तथैव[15] ह्यविमुक्तकम् ॥ यत्तत्परतरन्तत्त्वमविमुक्तमिति स्मृतम् ॥ ६१ ॥ एकेन जन्मना देवि वाराणस्यां तदाप्यते[16] ॥ भ्रूमध्ये नाभिमध्ये च हृदयेऽपि च मूर्द्धनि ॥ ६२ ॥ यथाविमुक्तमादित्ये वाराणस्यां व्यवस्थितम् ॥ वरणायास्तथा ह्यस्यां[17] मध्ये वाराणसी पुरी ॥६३॥ तत्रैव संस्थितन्तत्त्वं नित्यमेवाविमुक्तिकम् ॥ वाराणस्याः परं स्थानं न भूतं न भविष्यति ॥६४॥

१ विशिष्टैः पातकैरिति पा०। २ न यास्यन्ति परमिति पा० । ३ प्रवेशादिति पा० । ४ तपः इति पा० । ५ ऽमरानिति पा० । ६ वाधार्म्मिक इति पा०। ७ सकलं कुलमिति पा० । ८ येऽर्च्चयन्ति स्तुवन्ति च इति पा० । ९परममिति पा० । १० भक्त्या इति पा० । ११ मेतद्विज्ञानमुच्यते इति पा०। १२ ज्ञानध्यानाभिनिष्ठानामिति पा०। १३ योगान्ते विहिता मुक्तिः साविमुक्तमृतस्य तु इति पा०। १४ स्वयमीश्वर इति पा० । १५ तत्रैव इति पा० । १६ तदाप्नुयादिति पा० । १७ चास्या इति पा० ।

यथा नारायणोदेवो महादेवादिवेश्वरात् ॥ तत्र देवाः सगन्धर्व्वाः सयक्षोरगराक्षसाः ॥ ६५ ॥ उपासते मां सततं देवदेवः पितामहः ॥ महापातकिनो ये च ये तेभ्यः पापकृत्तमाः ॥ ६६ ॥ वाराणसीं समासाद्य ते यान्ति परमां गतिम् ॥ तस्मान्मुमुक्षुर्नियतो वसेच्चामरणान्तिकम् ॥ ६७ ॥ वाराणस्यां महादेवि ज्ञानं लब्ध्वा विमुच्यते ॥ किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसाम् ॥६८॥ ततो नैव चरेत्पापं कायेन मनसा गिरा॥ एतद्रहस्यं वेदानां पुराणानां द्विजोत्तमाः॥६९॥अविमुक्ताश्रयं ज्ञानं न किञ्चिद्वेद्मि तत्परम्॥देवतानामृषीणाञ्च शृण्वतां परमेष्ठिनाम् ॥७०॥ देव्यै देवेन कथितं सर्व्वपापविनाशनम् ॥यथा नारायणः श्रेष्ठो देवानां पुरुषोत्तमः॥७१॥यथेश्वराणां गिरिशः स्थानानाञ्चैतदुत्तमम्॥यैः समाराधितो रुद्रः पूर्व्वस्मिन्नेव जन्मनि॥७२॥तं विन्दन्ति परं क्षेत्रमविमुक्तं शिवालयम्॥कलिकल्मषसम्भूता येषामुपहता मतिः॥७३॥न तेषां वीक्षितुं शक्यं स्थानं तत्परमेष्ठिनः॥ये स्मरन्ति सदा कालं विन्दन्ति च पुरीमिमाम्॥७४॥तेषां विनश्यति क्षिप्रमिहामुत्र च पातकम्॥ यानि चेह प्रकुर्व्वन्ति पातकानि कृतालयाः७५ नाशयेत्तानि सर्व्वाणि तेन कालतनुः शिवः ॥ आगच्छतामिदं स्थानं सेवितुं मोक्षकाङ्क्षिणाम् ॥ ७६ ॥ मृतानां वै पुनर्जन्म न भूयो भवसागरे ॥ तस्मात्सर्व्वप्रयत्नेन वाराणस्यां वसेन्नरः ॥ ७७ ॥ योगी वाप्यथवायोगी पापी वा पुण्यकृत्तमः ॥ न लोकवचनात्पित्रोर्न चैव गुरुवादतः ॥ ७८ ॥ मतिरुत्क्रमणीया स्यादविमुक्तागतिं प्रति ॥ ७९ ॥ सूत उवाच ॥ एवमुक्त्वाथ भगवान्व्यासो वेदविदां वरः ॥ सहैव शिष्यप्रवरैर्वाराणस्याञ्चचार ह ॥ ८० ॥ इति श्रीकूर्म्मपुराणे वाराणसीमाहात्म्यं नाम एकत्रिंशोऽध्यायः ॥ ३१ ॥ अथ वाराणसीमाहात्म्यम् ॥ सूत उवाच ॥ स शिष्यैः संवृतो धीमान् गुरुर्द्वैपायनो मुनिः ॥ जगाम विपुलं लिंगमोङ्कारं मुक्तिदायकम् ॥ १ ॥ तत्राभ्यर्च्य महादेवं शिष्यैः सह महामुनिः ॥ प्रोवाच तस्य माहात्म्यं मुनीनां भावितात्मनाम् । २ ॥ इदं तद्विमलं लिंगमोङ्कारं नाम शोभनम् ॥ अस्य स्मरणमात्रेण मुच्यते सर्व्वपातकैः ॥ ३ ॥ अत्र तत्परमं ज्ञानं पञ्चायतनमुत्तमम् ॥ अर्च्चितं मुनिभिर्नित्यं वाराणस्यां विमोक्षदम् ॥ ४ ॥ अत्र साक्षान्महादेवः पञ्चायतनविग्रहः ॥ रमते भगवान्रुद्रो जन्तूनामपवर्गदः ॥ ५ ॥ यत्तत्पाशुपतं ज्ञानं पञ्चार्थमिति कथ्यते ॥ तदेव विमलं लिंग

---

१ पुरुषाणाञ्च सुव्रता इति पा० । २ कश्चिद्वेत्ति तत्त्वत इति पा० । ३ अनाद[illegible]मेति पा० । ४ [illegible]तुमिति पा० । ५ वहन्तीति पा० । ६ देवः इति पा० । ७ इत्येवमुक्त्वा इति पा० । ८ [illegible]मिति पा० । ९ एतदिति पा० । १० सेवितमिति पा० । ११ वरः इति [illegible] । १२ शक्यं इति पा० ।

मोङ्कारं समवस्थितम् ॥ ६ ॥ शान्त्यतीता परा शान्तिर्विद्या चैव यथाक्रमम् ॥ प्रतिष्ठा च निवृत्तिश्च पञ्चार्थं लिंगमैश्वरम् ॥ ॥ ७ ॥ पञ्चानामपि देवानां ब्रह्मादीनां यदाश्रयम्[2] ॥ ओङ्कारबोधितं[3] लिङ्गं पञ्चायतनमुच्यते[4] ॥ ८ ॥ संस्मरेदैश्वरं[5] लिङ्गं पञ्चायतनमव्ययम् ॥ देहान्ते तत्परं ज्योतिरानन्दं विशते पुनः[6] ॥ ९ ॥ अत्र देवर्षयः पूर्व्वं सिद्धा ब्रह्मर्षयस्तथा ॥ उपास्य देवमीशानं प्राप्तवन्तः परम्पदम् ॥ १० ॥ मत्स्योदर्य्यास्तटे पुण्यं स्थानं गुह्यतमं शुभम् ॥ गोचर्म्ममात्रं विप्रेन्द्रा ओङ्कारेश्वरमुत्तमम् ॥ ११ ॥ कृत्तिवासेश्वरं लिंगं मध्यमेश्वरमुत्तमम् ॥ विश्वेश्वरं तथोंकारं कपर्दीश्वरमुत्तमम् ॥ १२ ॥ एतानि गुह्यलिंगानि वाराणस्यां द्विजोत्तमाः ॥ न कश्चिदिह जानाति विना शम्भोरनुग्रहात् ॥ १३ ॥ एवमुक्त्वा ययौ कृष्णः पाराशर्य्यो महामुनिः ॥ कृत्तिवासेश्वरं लिंगं द्रष्टुं देवस्य शूलिनः ॥ १४ ॥ समभ्यर्च्य सदा शिष्यैर्माहात्म्यं कृत्तिवाससः ॥ कथयामास विप्रेभ्यो भगवान् ब्रह्मवित्तमः ॥ १५ ॥ अस्मिन् स्थाने पुरा दैत्यो हस्ती भूत्वा भवान्तिकम् ॥ ब्राह्मणान् हन्तुमायातो येऽत्रं[7] नित्यमुपासते ॥ १६ ॥ तेषां लिंगान्महादेवः प्रादुरासीत्त्रिलोचनः ॥ रक्षणार्थं द्विजश्रेष्ठा भक्तानां भक्तवत्सलः ॥ १७ ॥ हत्वा गजाकृतिं दैत्यं शूलेनावज्ञया हरः ॥ वासस्तस्याकरोत्कृत्तिं कृत्तिवासेश्वरस्ततः ॥ १८ ॥ अत्र[8] सिद्धिम्परां प्राप्ता मुनयो मुनिपुंगवाः ॥ तेनैव च शरीरेण प्राप्तास्तत्परमम्पदम् ॥ १९ ॥ विद्या विद्येश्वरा रुद्राः शिवा ये वै[9] प्रकीर्त्तिताः ॥ कृत्तिवासेश्वरं लिंगं नित्यमावृत्य संस्थिताः ॥ २० ॥ ज्ञात्वा कलियुगं घोरमधर्म्मबहुलञ्जनाः ॥ कृत्तिवासं न मुञ्चन्ति कृतार्थास्ते न संशयः ॥ २१ ॥ जन्मान्तरसहस्रेण मोक्षोऽन्यत्राप्यते न वा ॥ एकेन जन्मना[10] मोक्षः कृत्तिवासे तु लभ्यते ॥ २२ ॥ आलयः सर्व्वसिद्धानामेतत्स्थानं वदन्ति हि ॥ गोपितन्देवदेवेन महादेवेन शम्भुना ॥ २३ ॥ युगे युगे ह्यत्र दान्ता ब्राह्मणा वेदपारगाः ॥ उपासते महादेवं जपन्ति शतरुद्रियम् ॥ २४ ॥ स्तुवन्ति सततं देवं महादेवं त्रियम्बकम्[11] ॥ ध्यायन्तो[12] हृदये नित्यं स्थाणुं सर्वान्तरं[13] शिवम् ॥ २५ ॥ गायन्ति सिद्धाः किल गीतकानि ये वाराणस्यां निवसन्ति विप्राः[14] ॥ तेषामथैकेन भवेन मुक्तिः ये कृत्तिवासं शरणं प्रपन्नाः ॥ २६ ॥ सम्प्राप्य लोके जगतामभीष्टं सुदुर्ल्लभं विप्रकुलेषु जन्म ॥ ध्यानं[15] समादाय जपन्ति

१ तथा इति पा० । २ सदाश्रय मिति पा० । ३ ओङ्काकरबोधकमिति पा० । ४ मव्ययमिति पा० । ५ बुधः इति पा० । ६ तथा इति पा० । ७ येनेति पा० । ८ तत्र इति पा० । ९ च इति पा० । १० वसता इति पा० । ११ त्र्यक्षकं कृत्तिवाससमिति पा० । १२ ध्यायन्तीति पा० । १३ सर्व्वोत्तरमिति पा० । १४ वाराणसीं ये निवसन्ति विप्राः इति पा० । १५ काले इति पा० ।

रुद्रं ध्यायन्ति चित्ते यतयो महेशम् ॥ २७ ॥ आराधयन्ति प्रभुमीशितारं वाराणसीमध्यगता मुनीन्द्राः ॥ यजन्ति यज्ञैरभिसन्धिहीनाः स्तुवन्ति रुद्रं प्रणमन्ति शम्भुम् ॥ २८ ॥ नमो भवायामलभाववधाम्ने स्थाणुं प्रपद्ये गिरिशं पुराणम् ॥ स्मरामि रुद्रं हृदये निविष्टं जाने महादेव मनेकरूपम् ॥ २९ ॥ इति श्रीकूर्म्मपुराणे वाराणसीमाहात्म्यं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ सूत उवाच ॥ समाभाष्य मुनीन्धीमान्देवदेवस्य शूलिनः ॥ जगाम लिङ्गं तद्द्रष्टुं कपर्दीश्वरमव्ययम् ॥ १ ॥ स्नात्वा तत्र विधानेन तर्पयित्वा पितॄन्द्विजाः ॥ पिशाचमोचने तीर्थे पूजयामास शूलि नम् ॥ २ ॥ तत्राश्चर्यमपश्यंस्ते मुनयो गुरुणा सह ॥ मेनिरे क्षेत्रमाहात्म्यं प्रणेमुर्गिरिशं हरम् ॥ ३ ॥ कश्चिदभ्याजगामेमं शार्दूलो घोररूपधृक् ॥ मृगीमेकां भक्षयितुं कपर्दीश्वरमुत्तमम् ॥ ४ ॥ तत्र सा भीतहृदया कृत्वा कृत्वा प्रदक्षिणम् ॥ धावमाना सुसम्भ्रान्ता व्याघ्रस्य वश मागता ॥ ५ ॥ तां विदार्य्य नखैस्तीक्ष्णैः शार्दूलः सुमहाबलः ॥ जगाम चान्यद्विजनं स दृष्ट्वा तान्मुनीश्वरान् ॥ ६ ॥ मृत मात्रा च सा बाला कपर्दीशाग्रतो मृगी ॥ अदृश्यत महाज्वाला व्योम्नि सूर्य्यसमप्रभा ॥ ७ ॥ त्रिनेत्रा नीलकण्ठा च शशाङ्काङ्कितशेखरा ॥ वृषाधिरूढा पुरुषैस्तादृशैरेव संयता ॥ ८ ॥ पुष्पवृष्टिं विमुञ्चन्ति खेचरास्तस्य मूर्द्धनि ॥ गणेश्वरः स्वयं भूत्वा न दृष्टस्तत्क्षणात्ततः ॥ ९ ॥ दृष्ट्वै तदाश्चर्य्यवरं जैमिनिप्रमुखास्तदा ॥ कपर्दीश्वरमाहात्म्यं पप्रच्छुर्गुरुमच्युतम् ॥ १० ॥ तेषां प्रोवाच भगवान्देवाग्रे चोपविश्य सः ॥ कपर्दीशस्य माहा त्म्यं प्रणम्य वृषभध्वजम् ॥ ११ ॥ (स्मृत्यैवाशेषपापौघं क्षिप्रमस्य विनश्यति ॥ कामक्रोधादयो दोषा वाराणस्यां निवासिनः ॥ विघ्नाः सर्व्वे विन श्यन्ति कपर्दीश्वरपूजनात् ॥ तस्मात्सदैव द्रष्टव्यं कपर्दीश्वरमुत्तमम् ॥) इदं देवस्य तल्लिङ्गं कपर्दीश्वरमुत्तमम् ॥ पूजितव्यं प्रयत्नेन स्तोतव्यं वैदिकैः स्तवैः ॥ १२ ॥ ध्यायतामत्र नियतं योगिनां शान्तचेतसाम् ॥ जायते योगसिद्धिश्च षण्मासेन न संशयः ॥ १३ ॥ ब्रह्महत्यादिपापानि विनश्यन्त्य स्य पूजनात् ॥ पिशाचमोचने कुण्डे स्नातस्यात्र समीपतः ॥ १४ ॥ अस्मिन्क्षेत्रे पुरा विप्रास्तपस्वी शंसितव्रतः ॥ शङ्कुकर्ण इति ख्यातः पूजयामा स शूलिनम् ॥ १५ ॥ जजाप रुद्रमनिशं प्रणवं रुद्ररूपिणम् ॥ पुष्पधूपादिभिः स्तोत्रैर्नमस्कारैः प्रदक्षिणैः ॥ १६ ॥ उवास तत्र योगात्मा कृत्वा दीक्षान्तु नैष्ठिकीम् ॥ कदाचिदागतं प्रेतं पश्यति स्म क्षुधान्वितम् ॥ १७ ॥ अस्थिचर्म्मपिनद्धाङ्गं निःश्वसन्तं मुहुर्मुहुः ॥ तं दृष्ट्वा स मुनिश्रेष्ठः कृपया

१ ध्यायन्ति ये चित्तगतं महेशमिति पा० । २ योग इति पा० । ३ वारयामास सम्भ्रान्ता इति पा० । ४ देशं दृष्ट्वा मुनीश्वरमिति पा० । ५ नीलखट्वाङ्गा इति पा० । ६ मूर्द्धजा इति पा० । ७ तरभि- ति पा० । ८ सिद्धिः सा इति पा० ।





60

परया युतः ॥ १८ ॥ प्रोवाच को भवान् कस्माद्देशाद्देशमिमङ्गतः ॥ तस्मै पिशाचः क्षुधया पीड्यमानोऽब्रवीद्वचः ॥ १९ ॥ पूर्व्वंजन्मन्यहं विप्रो धनधान्यसमन्वितः ॥ पुत्रपौत्रादिभिर्युक्तः कुटुम्बभरणोत्सुकः ॥ २० ॥ न पूजिता मया देवा गावोऽप्यतिथयस्तथा ॥ न कदाचित्कृतं पुण्यमल्पं वा स्वल्पमेव वा ॥ २१ ॥ एकदा भगवान्रुद्रो गोवृषेश्वरवाहनः ॥ विश्वेश्वरो वाराणस्यां दृष्टः स्पृष्टो नमस्कृतः ॥ २२ ॥ तदाचिरेण कालेन पञ्चत्वमहमागतः ॥ न दृष्टं तन्महाघोरं यमस्य वदनं मुने ॥ २३ ॥ ईदृशीं योनिमापन्नः पैशाचीं क्षुधयार्दितः ॥ पिपासया परिक्रान्तो न जानामि हिताहितम् ॥ २४ ॥ यदि कश्चित्समुद्धर्त्तुमुपायं पश्यसि प्रभो ॥ कुरुष्व तं नमस्तुभ्यं त्वामहं शरणं गतः ॥ २५ ॥ इत्युक्तः शङ्कुकर्णोऽथ पिशाचमिदमब्रवीत् ॥ त्वादृशो नहि लोकेऽस्मिन्विद्यते पुण्यकृत्तमः ॥ २६ ॥ यत्त्वया भगवान् पूर्व्वं दृष्टो विश्वेश्वरः शिवः ॥ संस्पृष्टो वन्दितो भूयः कोऽन्यस्त्वत्सदृशो भुवि ॥ २७ ॥ तेन कर्म्मविपाकेन देशमेतं समागतः ॥ स्नानं कुरुष्व शीघ्रं त्वमस्मिन् कुण्डे समाहितः ॥ २८ ॥ येनेमां कुत्सितां योनिं क्षिप्रमेव प्रहास्यसि ॥ २९ ॥ स एवमुक्तो मुनिना पिशाचो दयावता देववरं त्रिनेत्रम् ॥ स्मृत्वा कपर्द्दीश्वरमीशितारं चक्रे समाधाय मनोऽवगाहम् ॥ ३० ॥ तदावगाहान्मुनि सन्निधाने ममार दिव्याभरणोपपन्नः ॥ अदृश्यतार्कप्रतिमे विमाने शशाङ्कचिह्नाङ्कितचारुमौलिः ॥ ३१ ॥ विभाति रुद्रैरुदितो दिविस्थैः समावृतो योगिभिरप्रमेयैः ॥ स वालखिल्यादिभिरेष देवो यथोदये भानुरशेषदेवः ॥ ३२ ॥ स्तुवन्ति सिद्धा दिवि देवसङ्घा नृत्यन्ति दिव्याप्सरसोऽभिरामाः ॥ मुञ्चन्ति वृष्टिं कुसुमालिमिश्रां गन्धर्वविद्याधरकिन्नराद्याः ॥ ३३ ॥ संस्तूयमानोऽथ मुनीन्द्रसङ्घैरवाप्य बोधं भगवत्प्रसादात् ॥ समाविशन्मण्डलमेवमग्र्यं त्रयीमयं यत्र विभाति रुद्रः ॥ ३४ ॥ दृष्ट्वा विमुक्तं स पिशाचभूतं मुनिः प्रहृष्टो मनसा महेशम् ॥ विचिन्त्य रुद्रं कविमेवमग्र्यं प्रणम्य तुष्टाव कपर्द्दिनं तम् ॥ ३५ ॥ शंकुकर्ण उवाच ॥ नमामि नित्यं परतः परस्ताद्गोप्तारमेकं पुरुषं पुराणम् ॥ व्रजामि योगेश्वरमीशितारमादित्यमग्निं कलिलाधिरूढम् ॥ ३६ ॥ त्वां ब्रह्मपारं हृदि सन्निविष्टं हिरण्मयं योगिनमादिहीनम् ॥ व्रजामि रुद्रं शरणं दिविस्थं महामुनिं ब्रह्मपरं पवित्रम् ॥ ३७ ॥ सहस्रपादाक्षिशिरोऽभियुक्तं सहस्रबाहुन्तमसः परस्ताम् ॥ त्वां ब्रह्मपारं प्रणमामि शम्भुं हिरण्यगर्भाधिपतिं त्रिनेत्रम् ॥ ३८ ॥ यतः प्रसूतिर्जगतो विनाशो येनाहतं सर्वमिदं शिवेन ॥ तं ब्रह्मपारं भगवन्तमीशं प्रणम्य नित्यं शरणं प्रपद्ये ॥ ३९ ॥ अलिङ्ग



१ देव इति पा० । २ पिपासयाधुनाक्रान्त इति पा० । ३ तदावगाढो मुनि इति, तदावगाह्य इति पा० । ४ मेतदग्र्यमिति पा० । ५ कपर्द्दिनं त्वामिति पा० । ६ भोगिनमादिमन्तमिति पा० । ७ ब्रह्ममयमिति पा० ।

मालोकविहीनरूपं स्वयंप्रभुश्चित्प्रतिमैकरुद्रम् ॥ तं ब्रह्मपारं परमेश्वरं त्वां नमस्करिष्ये न यतोऽन्यदस्ति ॥ ४० ॥ यं योगिनस्त्यक्तसबीजयोगा लब्ध्वा समाधिम्परमात्मभूताः ॥ पश्यन्ति देवं प्रणतोऽस्मि नित्यं तद्ब्रह्मपारं भवतः स्वरूपम् ॥ ४१ ॥ न यत्र नामानि विशेषतृप्तिर्न संदृशे तिष्ठति यत्स्वरूपम् ॥ तं ब्रह्मपारं प्रणतोऽस्मि नित्यं स्वयम्भुवं त्वां शरणं प्रपद्ये ॥ ४२ ॥ यद्वेदवेदाभिरता विदेहं स ब्रह्मविज्ञानमभेदमेकम् ॥ पश्यन्त्यनेकं भवतः स्वरूपं तद्ब्रह्मपारं प्रणमामि नित्यम् ॥ ४३ ॥ यतः प्रधानं पुरुषः पुराणो विवर्त्तते यं प्रणमन्ति देवाः ॥ नमामि तं ज्योतिषि संनिविष्टं कालं बृहन्तम्भवतः स्वरूपम् ॥ ४४ ॥ व्रजामि नित्यं शरणं महेशं स्थाणुं प्रपद्ये गिरिशं पुराणम् ॥ शिवं प्रपद्ये हरमिन्दुमौलिं पिनाकिनं त्वां शरणं व्रजामि ॥ ४५ ॥ स्तुत्वैवं शंकुकर्णोसौ भगवन्तङ्कपर्दिनम् ॥ पपात दण्डवद्भूमौ प्रोच्चरन्प्रणवं शिवम् ॥ ४६ ॥ तत्क्षणात्परमं लिङ्गं प्रादुर्भूतं शिवात्मकम् ॥ ज्ञानमानन्दमद्वैतं कोटिकालाग्निसन्निभम् ॥ ४७ ॥ शंकुकर्णोऽथ स तदा मुनिः सर्वात्मकोऽमलः ॥ निर्लिम्पे विमले लिङ्गे तदद्भुतमिवाभवत् ॥ ४८ ॥ एतद्रहस्यमाख्यातं माहात्म्यं च कपर्दिनः ॥ न कश्चिद्वेत्ति तमसा विद्वानप्यत्र मुह्यति ॥ ४९ ॥ य इमां शृणुयान्नित्यं कथां पापप्रणाशिनीम् ॥ भक्तः पापविर्मुक्तात्मा रुद्रसामीप्यमाप्नुयात् ॥ ५० ॥ पठेच्च सततं शुद्धो ब्रह्मपारं महास्तवम् ॥ प्रातर्म्मध्याह्नसमये स योगं प्राप्नुयान्नरः ॥ ५१ ॥ इहैव नित्यं वत्स्यामो देवदेवं कपर्दिनम् ॥ द्रक्ष्यामः सततं देवं पूजयामस्त्रिलोचनम् ॥ ५२ ॥ इत्युक्त्वा भगवान्व्यासः शिष्यैः सह महाद्युतिः ॥ उवास तत्र युक्तात्मा पूजयन्वै कपर्दिनम् ॥ ५३ ॥ इति श्रीकूर्म्मपुराणे वाराणसीमाहात्म्यं नाम त्रयस्त्रिंशोऽध्यायः ॥३३॥ सूत उवाच॥उषित्वा तत्र भगवान् कपर्दीशान्तिके पुनः॥ ययौ द्रष्टुं मध्यमेशं बहुवर्षगणान्प्रभुः ॥१॥ तत्र मन्दाकिनीं पुण्यामृषिसङ्घनिषेविताम् ॥ नदीं विमलपानीयां दृष्ट्वा हृष्टोऽभवन्मुनिः ॥२॥ स तामन्वीक्ष्य मुनिभिः सह द्वैपायनः प्रभुः ॥ चकार भावपूतात्मा स्नानं स्नानविधानवित् ॥ ३ ॥ ( पूजयामास लोकादिं पुष्पैर्नानाविधैर्भवम् ॥ प्रविश्य शिष्यप्रवरैः सार्द्धं सत्यवतीसुतः ॥ ) सन्तर्प्य विधिवद्देवानृषीन् पितृगणांस्तथा ॥ मध्यमेश्वरमीशानमर्चयामास शूलिनम् ॥४॥ ततः पाशुपताः शान्ता भस्मोद्धूलितविग्रहाः ॥ द्रष्टुं समागता रुद्रं मध्यमेश्वरमीश्वरम् ॥५॥ ओङ्कार

---

१ सहस्ररूपमिति पा० । २ रुद्रमिति पा० । ३ मानादीति, नामादीति पा० । ४ यस्य रूपमिति पा० । ५ वेदवेदाभिरताः—वेदानां वेदः ज्ञानं तस्मिन् रताः । ब्रह्मयादाभिरताः इति, यद्देववाग्यादिभिरादिदेवमिति पा० । ६ प्रणतोऽस्मीति पा० । ७ वेदाः इति पा० । ८ गृहेशमिति, गुहेशमिति पा० । ९ नमामीति पा० । १० परमिति पा० । ११ मुक्तात्मा—धर्म्मात्मा सर्व्वगोऽमलः इति पा० । १२ निर्लिप्ये इति पा० । १३ त्यक्तपापविमुक्तात्मा इति पा० । १४ परामिति पा० । १५ पूजयामोऽथ शूलिनमिति पा० । १६ महामुनिरिति पा० । १७ मध्यदेशमिति पा० ।

सक्तमनसो वेदाध्ययनतत्पराः ॥ जटिला मुण्डिताश्चापि शुक्लयज्ञोपवीतिनः ॥ ६ ॥ कौपीनवसनाः केचिदपरे चाप्यवाससः ॥ ब्रह्मचर्यरताः शान्ता दान्ता वै ज्ञानतत्पराः ॥ ७ ॥ दृष्ट्वा द्वैपायनं विप्राः शिष्यैः परिवृतं मुनिम् ॥ पूजयित्वा यथान्यायमिदं वचनमब्रुवन् ॥८॥ को भवान् कुत आयातः सह शिष्यैर्म्महामुने ॥ प्रोचुः पैलादयः शिष्यास्तानृषीन्धर्म्मभावितान् ॥ ९ ॥ अयं सत्यवतीसूनुः कृष्णद्वैपायनः प्रभुः ॥ व्यासः स्वयं हृषीकेशो येन वेदाः पृथक्कृताः ॥ १० ॥ यस्य देवो महादेवः साक्षाद्देवः पिनाकधृक् ॥ अंशांशेनाभवत्पुत्रो नाम्ना शुक इति प्रभुः ॥ ११ ॥ यो वै साक्षान्महादेवं सर्व्वभावेन शंकरम् ॥ प्रपन्नः परया भक्त्या यस्य तज्ज्ञानमैश्वरम् ॥ १२ ॥ ततः पाशुपताः सर्वे ते च हृष्टतनूरुहाः ॥ ऊचुरव्यग्रमनसो व्यासं सत्यवतीसुतम् ॥ १३ ॥ भगवन् भवता ज्ञातं विज्ञानं परमेष्ठिनः ॥ प्रसादाद्देवदेवस्य यत्तन्माहेश्वरं परम् ॥ १४ ॥ तद्वदास्माकमव्यग्रं रहस्यं गुह्यमुत्तमम् ॥ क्षिप्रं पश्येम तं देवं श्रुत्वा भगवतो मुखात् ॥ १५ ॥ विसर्जयित्वा ताञ्छिष्यान् सुमन्तुप्रमुखांस्तदा ॥ प्रोवाच तत्परं ज्ञानं योगिभ्यो योगवित्तमः ॥ १६ ॥ तत्क्षणादेव विमलं सम्भूतं ज्योतिरुत्तमम् ॥ लीनास्तत्रैव ते विप्राः क्षणादन्तरधीयत ॥ १७ ॥ ततः शिष्यान् समाहूय भगवान् ब्रह्मवित्तमः ॥ प्रोवाच मध्यमेशस्य माहात्म्यं पैलपूर्व्वकान् ॥ १८ ॥ अस्मिन् स्थाने स्वयं देवो देव्या सह महेश्वरः ॥ रमते भगवान्नित्यं रुद्रैश्च परिवारितः ॥ १९ ॥ अत्र पूर्व्वं हृषीकेशो विश्वात्मा देवकीसुतः ॥ उवास वत्सरं कृष्णः सदा पाशुपतैर्वृतः ॥ २० ॥ भस्मोद्धूलितसर्व्वाङ्गो रुद्राराधनतत्परः ॥ आराधयन् हरिः शम्भुं कृत्वा पाशुपतं व्रतम् ॥ २१ ॥ तस्य वै बहवः शिष्या ब्रह्मचर्य्यपरायणाः ॥ लब्ध्वा तद्वचनाज्ज्ञानं दृष्टवन्तो महेश्वरम् ॥ २२ ॥ तस्य देवो महादेवः प्रत्यक्षं नीललोहितः ॥ ददौ कृष्णस्य भगवान्वरदो वरमुत्तमम् ॥ २३ ॥ येऽर्च्चयिष्यन्ति गोविन्दं मद्भक्ता विधिपूर्व्वकम् ॥ तेषां तदैश्वरं ज्ञानमुत्पत्स्यति जगन्मय ॥ २४ ॥ त्वमीशोऽर्चयितव्यश्च ध्यातव्यो मत्परैर्जनैः ॥ भविष्यसि न सन्देहो मत्प्रसादाद्द्विजातिभिः ॥२५॥ ये च द्रक्ष्यन्ति देवेशं ध्यात्वा देवं पिनाकिनम् ॥ ब्रह्महत्यादिकं पापं तेषामाशु विनश्यति ॥२६॥

१ शुक्लेति पा० । २ चान्यवाससः इति पा० । ३ वेदान्तध्यानतत्पराः इति, वेदान्तज्ञानतत्परा इति पा० । ४ शैलादयः इति पा० । ५ मुनिरिति पा० । ६ स इति पा० । ७ हृष्टसर्व्वतनूरुहाः इति पा० । ८ नेमुरिति पा० । ९ प्रोचुरिति पा० । १० पदमिति पा० ११मव्यक्तमिति पा० । १२ समाभाष्य च इति पा० । विसर्जयित्वा इत्यार्षम् । १३ स्वयम्भूप्रमुखांस्ततः इति पा० । १४ योगिन इति पा० । १५ समाहूयेति पा० । १६ शैलपूर्व्वकानिति पा० । १७ रुद्राध्ययनतत्पर इति पा० । १८ तद्वदनादिति पा० । १९ परस्मैपदमार्षम् ।२०नमस्यो इति पा० । २१ भविष्यन्तीति पा० । २२ द्विजातयः इति पा० । २३ येऽत्र इति पा० ! २४ ज्ञात्वा रुद्रमिति पा० ।

प्राणांस्त्यजन्ति ये विप्राः पापकर्म्मरता अपि ॥ ते यान्ति परमं स्थानं नात्र कार्य्या विचारणा ॥ २७ ॥ धन्यास्तथ्यन्तु ते विप्रा मन्दाकिन्यां कृतोदकाः ॥ अर्चयन्ति महादेवं मध्यमेश्वरमुत्तमम् ॥ २८ ॥ स्नानं दानं तपः श्राद्धं पिण्डनिर्व्वपणन्त्विह ॥ एकैकशः कृतं विप्राः पुनात्यासप्तमं कुलम् ॥ २९ ॥ सन्निहत्यामुपस्पृश्य राहुग्रस्ते दिवाकरे ॥ यत्फलं लभते मर्त्यस्तस्माद्दशगुणन्त्विह ॥ ३० ॥ एवमुक्त्वा महायोगी मध्यमेशान्तिके प्रभुः ॥ उवास सुचिरङ्कालं पूजयन्वै महेश्वरम्॥३१॥इति श्रीकूर्म्मपुराणे वाराणसीमाहात्म्यं नाम चतुस्त्रिंशोऽध्यायः ॥३४॥ सूत उवाच ॥ ततः सर्व्वाणि गुह्यानि तीर्थान्यायतनानि च ॥ जगाम भगवान्व्यासो जैमिनिप्रमुखैर्वृतः ॥ १ ॥ प्रयागं परमं तीर्थं प्रयागादधिकं शुभम् ॥ विश्वरूपं तथा तीर्थं कालतीर्थमनुत्तमम् ॥ २ ॥ आकाशाख्यं महातीर्थं तीर्थञ्चैवानुषं परम् ॥ स्वर्ल्लीनञ्च महातीर्थं गौरीतीर्थमनुत्तमम् ॥ ३ ॥ प्राजापत्यं परं तीर्थं स्वर्गद्वारं तथैव च ॥ जम्बुकेश्वरमित्युक्तं चर्म्माख्यं तीर्थमुत्तमम् ॥ ४ ॥ गयातीर्थं महातीर्थं तीर्थञ्चैव महानदी ॥ नारायणं परं तीर्थं वायुतीर्थमनुत्तमम् ॥ ५ ॥ ज्ञानतीर्थं परं गुह्यं वाराहन्तीर्थमुत्तमम् ॥ यमतीर्थं महापुण्यं तीर्थं संवर्त्तकं परम् ॥ ॥ ६ ॥ अग्नितीर्थं द्विजश्रेष्ठाः कालकेश्वरमुत्तमम् ॥ नागतीर्थं सोमतीर्थं सूर्य्यतीर्थं तथैव च ॥ ७ ॥ पर्व्वताख्यं महापुण्यं मणिकर्णमनुत्तमम् ॥ घटोत्कचं तीर्थवरं श्रीतीर्थञ्च पितामहम् ॥ ८ ॥ गङ्गातीर्थन्तु देवेशं तथा तत्तीर्थमुत्तमम् ॥ कापिलञ्चैव सोमेशं ब्रह्मतीर्थमनुत्तमम् ॥ ९ ॥ (यत्र लिंगं पूजनीयं स्नातुं ब्रह्मा यदागतः ॥ तदानीं स्थापयामास विष्णुस्तल्लिंगमैश्वरम् ॥ ततः स्नात्वा समागत्य ब्रह्मा प्रोवाच तं हरिम् ॥ मयानीतमिदं लिंगं कस्मात्स्थापितवानसि ॥ तमाह विष्णुस्त्वत्तोऽपि रुद्रे भक्तिर्दृढा यतः ॥ तस्मात्प्रतिष्ठितं लिंगं नाम्ना तत्र भविष्यति ॥) भूतेश्वरं तथा तीर्थं तीर्थं धर्म्मसमुद्भवम् ॥ गन्धर्व्वतीर्थं सुशुभं वाह्नेयन्तीर्थमुत्तमम् ॥ १० ॥ दौर्वासिकं होमतीर्थं चन्द्रतीर्थं द्विजोत्तमाः ॥ चित्रांगदेश्वरं पुण्यं पुण्यं विद्याधरेश्वरम् ॥ ११ ॥ केदारं तीर्थमुख्याख्यं कालञ्जरमनुत्तमम् ॥ सारस्वतं प्रभासञ्च खेटकर्णं हरं शुभम् ॥ १२ ॥ लौकिकाख्यं महातीर्थं तीर्थञ्चैव हिमालयम् ॥ हिरण्यगर्भं गोप्रख्यं तीर्थञ्चैव वृषध्वजम् ॥ १३ ॥ उपशान्तं शिवञ्चैव व्याघ्रेश्वर

---

१ मर्त्यां इति पा० । २ तत्परमिति पा० ३ कार्य्यविचारणा इति पा० । ४ धन्यास्तु खलु मे इति पा० । ५ श्रुत्वा इति पा० । ६ चैवार्षभमिति पा० । ७ केदारं तीर्थमुत्तममिति पा०। ८ स्वर्गतीर्थमिति पा०। ९ शुभमिति पा०। १० फलशेश्वरमुत्तममिति पा०। ११ महागुह्यमिति पा०। १२ देवीशमिति पा०। १३ ययातेस्तीर्थमुत्तममिति पा०। १४व्योमतीर्थमिति पा०। १५ कालिञ्जरमिति पा०। १६ भद्रकर्णं फलमिति पा० ।

मनुत्तमम् ॥ त्रिलोचनं महातीर्थं लोलार्कश्चोत्तराह्वयम् ॥ १४ ॥ कपालमोचनं तीर्थं ब्रह्महत्याविनाशनम् ॥ शुक्रेश्वरं महापुण्यमानन्दपुरमुत्तमम् ॥ १५ ॥ एवमादीनि तीर्थानि प्राधान्यात्कथितानि तु ॥ न शक्या विस्तराद्वक्तुं तीर्थसंख्या द्विजोत्तमाः ॥ १६ ॥ तेषु सर्व्वेषु तीर्थेषु स्नात्वाभ्यर्च्य सनातनम् ॥ उपोष्य तत्र तत्रासौ पाराशर्य्यो महामुनिः ॥ १७ ॥ तर्पयित्वा पितृन्देवान् कृत्वा पिण्डप्रदानकम् ॥ जगाम पुनरेवापि यत्र विश्वेश्वरः शिवः ॥ १८ ॥ स्नात्वाभ्यर्च्य महालिंगं शिष्यैः सह महामुनिः ॥ उवाच शिष्यान्धर्म्मात्मा यथेष्टं गन्तुमर्हथ ॥ १९ ॥ ते प्रणम्य महात्मानं जग्मुः पैलादयो द्विजाः ॥ वासञ्च तत्र नियतो वाराणस्यां चकार सः ॥ २० ॥ शान्तो दान्तस्त्रिषवणं स्नात्वाभ्यर्च्य पिनाकिनम् ॥ भैक्षाहारो विशुद्धात्मा ब्रह्मचर्य्यपरायणः ॥ २१ ॥ कदाचित्तत्र वसता व्यासेनामिततेजसा ॥ भ्रममाणेन भिक्षा वै नैव लब्धा द्विजोत्तमाः ॥२२॥ ततः क्रोधावृततनुर्नराणामिह वासिनाम् ॥ विघ्नं सृजामि सर्व्वेषां येन सिद्धिर्हि हीयते ॥ २३ ॥ तत्क्षणात्सा महादेवी शंकरार्द्धशरीरिणी ॥ प्रादुरासीत्स्वयं प्रीत्या वेषं कृत्वा तु मानुषम् ॥ २४ ॥ भो भो व्यास महाबुद्धे शप्तव्या न त्वया पुरी ॥ गृहाण भिक्षां मत्तस्त्वमुक्त्वैवं प्रददौ शिवा ॥ २५ ॥ उवाच च महादेवी क्रोधनस्त्वं यतो मुने ॥ इह क्षेत्रे न वस्तव्यं कृतघ्नोऽसि यतः सदा ॥ २६ ॥ एवमुक्तः स भगवान्ध्यानाज्ज्ञात्वा परां शिवाम् ॥ उवाच प्रणतो भूत्वा स्तुत्वा च प्रवरैः स्तवैः ॥ २७ ॥ चतुर्दश्यामथाष्टम्यां प्रवेशं देहि शाङ्करि ॥ एवमस्त्वित्यनुज्ञाय देवी चान्तरधीयत ॥ २८ ॥ एवं स भगवान्व्यासो महायोगी पुरातनः ॥ ज्ञात्वा क्षेत्रगुणान् सर्व्वान् स्थितस्तस्याथ पार्श्वतः ॥ २९ ॥ एवं व्यासं स्थितं ज्ञात्वा क्षेत्रं सेवन्ति पण्डिताः ॥ तस्मात्सर्व्वप्रयत्नेन वाराणस्यां वसेन्नरः ॥ ३० ॥ सूत उवाच ॥ यः पठेदविमुक्तस्य माहात्म्यं शृणुयादथ ॥ श्रावयेद्वा द्विजाञ्छान्तान् स याति परमां गतिम् ॥ ३१ ॥ श्राद्धे वा दैविके कार्य्ये रात्रावहनि वा द्विजाः ॥ नदीनां चैव तीरेषु देवतायतनेषु च ॥ ३२ ॥ ज्ञात्वा समाहितमनाः कामक्रोधविवर्जितः ॥ जपेदीशं नमस्कृत्य स याति परमां गतिम् ॥ ३३ ॥ इति श्रीकूर्म्मपुराणे वाराणसीमाहात्म्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥ वाराणसीमाहात्म्यं समाप्तम् ॥ अथ प्रयागमाहा

---

१ शक्रेश्वरमिति पा० । २ महातीर्थमिति पा० । ३ पिनाकिनमिति पा० । ४ परं लिङ्गमिति पा० । ५ कदाचिद्वसता तत्रेति पा० । ६ भवता न हीति पा० । ७ भवान्यत इति पा० । ८ अपार्श्वत इति। पार्श्वभिन्ने देशे इत्यर्थः, अतिपार्श्वत इति पा० । ९ सेवन्तीति परस्मैपदमार्षम् । १० शृणुयादपीति पा० । ११ सोऽपि याति परं पदमिति पा० । १२ यात्रायां वा द्विजोत्तमा इति पा० । १३ स्नात्वा इति पा० । १४ दम्भमात्सर्य्यवर्जित इति पा० ।

त्म्यम् ॥ ऋषय ऊचुः ॥ माहात्म्यमविमुक्तस्य यथावत्समुदीरितम् ॥ इदानीञ्च प्रयागस्य माहात्म्यं ब्रूहि सुव्रत ॥ १ ॥ यानि तीर्थानि तत्रैव विश्रुतानि महान्ति वै ॥ इदानीं कथयास्माकं सूत सर्वार्थविद्भवान् ॥ २ ॥ सूत उवाच ॥ शृणुध्वमृषयः सर्व्वे विस्तरेण ब्रवीमि वः ॥ प्रयागस्य च माहात्म्यं यत्र देवः पितामहः ॥ ३ ॥ मार्कण्डेयेन कथितं कौन्तेयाय महात्मने ॥ यथा युधिष्ठिरायैतत्तद्वक्ष्ये भवतामहम् ॥ ४ ॥ निहत्य कौरवान्सर्व्वान्भ्रातृभिः सह पार्थिवः ॥ शोकेन महताविष्टो मुमोह स युधिष्ठिरः ॥ ५ ॥ अचिरेणाथ कालेन मार्कण्डेयो महातपाः ॥ सम्प्राप्तो हास्तिनपुरं राजद्वारे स तिष्ठति ॥ ६ ॥ द्वारपालोऽपि तं दृष्ट्वा राज्ञे कथितवान्द्भुतम् ॥ मार्कण्डेयो द्रष्टुमिच्छंस्त्वामास्ते द्वार्य्यसौ मुनिः ॥ ७ ॥ त्वरितो धर्म्मपुत्रस्तु द्वारमभ्येत्य सत्वरम् ॥ द्वारमभ्यागतस्येह स्वागतन्ते महामुने ॥ ८ ॥ अद्य मे सफलं जन्म अद्य मे तारितं कुलम् ॥ अद्य मे पितरस्तुष्टास्त्वयि तुष्टे सदा मुने ॥९॥ सिंहासनमुपस्थाप्य पादशौचार्चनादिभिः ॥ युधिष्ठिरो महात्मेति पूजयामास तं मुनिम् ॥१०॥ मार्कण्डेयस्तु संपृष्टः प्रोवाच स युधिष्ठिरम् ॥ किमर्थं मुह्यसे विद्वन् सर्व्वं ज्ञात्वा समागतः ॥ ११ ॥ ततो युधिष्ठिरो राजा प्रणम्य शिरसाब्रवीत् ॥ कथयस्व समासेन येन मुञ्चामि किल्बिषम् ॥ १२ ॥ निहता बहवो युद्धे पुंसो निरपराधिनः ॥ अस्माभिः कौरवैः सार्द्धं प्रसङ्गान्मुनिसत्तम ॥ १३ ॥ येन हिंसासमुद्भूताज्जन्मान्तरकृतादपि ॥ मुच्येमं पातकादद्य तद्भवान्वक्तुमर्हति ॥ १४ ॥ मार्कण्डेय उवाच ॥ शृणु राजन्महाभाग यन्मां पृच्छसि भारत ॥ प्रयागगमनं श्रेष्ठं नराणां पापनाशनम् ॥ १५ ॥ तत्र देवो महादेवो रुद्रोऽवात्सीन्नरेश्वर ॥ समास्ते भगवान् ब्रह्मा स्वयम्भूः सह दैवतैः ॥ १६ ॥ युधिष्ठिर उवाच ॥ भगवाञ्छ्रोतुमिच्छामि प्रयागगमने फलम् ॥ मृतानां का गतिस्तत्र स्नातानाञ्चैव किम्फलम् ॥ १७ ॥ ये वसन्ति प्रयागे तु ब्रूहि तेषान्तु किम्फलम् ॥ भवतो विदितं ह्येतत्तन्मे ब्रूहि नमोऽस्तु ते ॥ १८ ॥ मार्कण्डेय उवाच ॥ कथयिष्यामि ते वत्स प्रयागस्नानजं फलम् ॥ पुरा महर्षिभिः सम्यक्कथ्यमानं मया श्रुतम् ॥ १९ ॥ एतत्प्रजापतेः क्षेत्रन्त्रिषु लोकेषु विश्रुतम् ॥ अत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ २० ॥ तत्र ब्रह्मादयो देवा रक्षां कुर्व्वन्ति संगताः ॥

---

१ इदानीन्तु इति पा० । २ सत्तम इति पा० । ३ शृणुध्वं मुनय इति पा० । ४ द्रष्टुमिच्छुरिति पा० । ५ द्वारमित्याह तत्पर इति पा० । ६ स्वागतं ते महामाज्ञ इति पा० । ७ महा इति पा०। ८ ततस्तुष्ट इति पा० । ९ ज्ञात्वाहमागत इति पा० । १० मणम्याह महामुनिमिति पा० । ११ कथय त्वमिति पा० । १२ मुच्येय किल्बिषैरेति पा० । १३ पुङ्गव इति पा०। १४ मुच्यते इति पा०। १५ या चेष्टा यच्च तत्फलमिति, यच्च ते फलमिति पा० ।

सर्व्वलोकनिर्माता मन्नियोगेन सर्ववित् ॥ भूत्वा चतुर्मुखः सर्गं सृजत्येवात्मसम्भवः ॥ १३ ॥ योऽपि नारायणोऽनन्तो लोकानां प्रभवोऽव्ययः ॥ ममैव च परा मूर्त्तिः करोति परिपालनम् ॥ १४ ॥ योऽन्तकः सर्व्वभूतानां रुद्रः कालात्मकः प्रभुः ॥ मदाज्ञयासौ सततं संहरिष्यति मे तनुः ॥ १५ ॥ हव्यं वहति देवानां कव्यं कव्याशिनामपि ॥ पाकञ्च कुरुते वह्निः सोऽपि मच्छक्तिनोदितः ॥ १६ ॥ भुक्तमाहारजातञ्च पचते तदहर्निशम् ॥ वैश्वानरोऽग्निर्भगवानीश्वरस्य नियोगतः॥१७॥योऽपि सर्व्वाम्भसां योनिर्वरुणो देवपुंगवः॥सोऽपि सञ्जीवयेत्कृत्स्नमीश्वरस्य नियोगतः॥१८॥ योऽन्तस्तिष्ठति भूतानां बहिर्देवः प्रभञ्जनः॥ मदाज्ञयासौ भूतानां शरीराणि बिभर्त्ति हि ॥ १९ ॥ योऽपि सञ्जीवनो नृणां देवानाममृताकरः॥सोमः स मन्नियोगेन नोदितः किल वर्त्तते॥२०॥ यः स्वभासा जगत्कृत्स्नं प्रभासयति सर्वशः॥ सूर्य्यो वृष्टिं वितनुते स्वोस्त्रेणैवं स्वयम्भुवः॥२१॥योऽप्यशेषजगच्छास्ता शक्रः सर्व्वामरेश्वरः॥यज्वनां फलदो देवो वर्त्तते स मदाज्ञया॥२२॥यः प्रशास्ता ह्यसाधूनां वर्त्तते नियमादिह ॥ यमो वैवस्वतो देवो देवदेवनियोगतः॥२३॥योऽपि सर्व्वधनाध्यक्षो धनानां सम्प्रदायकः॥सोऽपीश्वरनियोगेन कुबेरो वर्त्तते सदा॥२४॥यः सर्वरक्षसां नाथस्तामसानां फलप्रदः॥ मन्नियोगादसौ देवो वर्त्तते निर्ऋतिः सदा ॥ २५ ॥ वेतालगणभूतानां स्वामी भोगफलप्रदः ॥ ईशानः किल भक्तानां सोऽपि तिष्ठेन्मदाज्ञया ॥ २६ ॥ यो वामदेवोऽङ्गिरसः शिष्यो रुद्रगणाग्रणीः ॥ रक्षको योगिनां नित्यं वर्त्ततेऽसौ मदाज्ञया ॥ २७ ॥ यश्च सर्व्वजगत्पूज्यो वर्त्तते विघ्ननायकः ॥ विनायको धर्म्मरतः सोपि मद्वचनात्किल ॥ २८ ॥ योऽपि ब्रह्मविदां श्रेष्ठो देवसेनापतिः प्रभुः ॥ स्कन्दोऽसौ वर्त्तते नित्यं स्वयम्भूर्विधिनोदितः ॥ २९ ॥ ये च प्रजानां पतयो मरीच्याद्या महर्षयः ॥ सृजन्ति विविधं लोकं परस्यैव नियोगतः ॥ ३० ॥ या च श्रीः सर्व्वभूतानान्ददाति विपुलां श्रियम् ॥ पत्नी नारायणस्यासौ वर्त्तते मदनुग्रहात् ॥ ३१ ॥ वाचं ददाति विपुलां या च देवी सरस्वती ॥ सापीश्वरनियोगेन नोदिता संप्रवर्त्तते ॥ ३२ ॥ याशेषपुरुषान् घोरान्नरकात्तारयिष्यति ॥ सावित्री संस्मृता चापि मदाज्ञानुविधायिनी ॥ ३३ ॥ पार्व्वती परमा देवी ब्रह्मविद्याप्रदायिनी ॥ यापि ध्याता विशेषेण सापि मद्वचनानुगा ॥ ३४ ॥ योऽनन्तमहिमानन्तः शेषोऽशेषामरप्रभुः ॥ दधाति शिरसा लोकं सोऽपि देवनियोगतः ॥ ३५ ॥ योऽग्निः संवर्त्तको नित्यं वडवारूपसंस्थितः ॥ पिबत्यखिलमम्भोधिमीश्वरस्य नियोगतः ॥ ३६ ॥ ये चतु

१ पचत्येतदहर्निशमिति पा० । २ मकाशयति सर्वदा इति पा० । ३ शास्त्रेणैवेति पा० । ४ तापसानामिति पा० । ५ यस्यैव निळयो गतः इति पा० । स च पाठो न समीचीनः । ६ पूजितेति पा० । ७ देवीति पा० ।

दश लोकेऽस्मिन्मनवः प्रथितौजसः ॥ पालयन्ति प्रजाः सर्वास्तेऽपि तस्य नियोगतः ॥ ३७ ॥ आदित्या वसवो रुद्रा मरुतश्च तथाश्विनौ ॥ अन्याश्च देवताः सर्वाः शास्त्रेणैव विनिर्म्मिताः ॥ ३८ ॥ गन्धर्वा गरुडाद्याश्च सिद्धाः साध्याश्च चारणाः ॥ यक्षरक्षःपिशाचाश्च स्थिताः सृष्टाः स्वयम्भुवा ॥ ३९ ॥ कलाकाष्ठानिमेषाश्च मुहूर्त्ता दिवसाः क्षपाः ॥ ऋतवः पक्षमासाश्च स्थिताः शास्त्रे प्रजापतेः ॥ ४० ॥ युगमन्वन्तराण्येव मम तिष्ठन्ति शासने ॥ पराश्चैव परार्द्धाश्च कालभेदास्तथापरे ॥ ४१ ॥ चतुर्विधानि भूतानि स्थावराणि चराणि च ॥ नियोगादेव वर्त्तन्ते देवस्य परमात्मनः ॥ ४२ ॥ पातालानि च सर्वाणि भुवनानि च शासनात् ॥ ब्रह्माण्डानि च वर्त्तन्ते सर्व्वाण्येव स्वयम्भुवः ॥ ४३ ॥ अतीतान्यप्यसंख्यानि ब्रह्माण्डानि ममाज्ञया ॥ प्रवृत्तानि पदार्थौघैः सहितानि समन्ततः ॥ ४४ ॥ ब्रह्माण्डानि भविष्यन्ति सह चात्मभिरात्मगैः ॥ करिष्यन्ति सदैवाज्ञां परस्य परमात्मनः ॥ ४५ ॥ भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ॥ भूतादिरादिप्रकृतिर्नियोगे मम वर्त्तते ॥ ४६ ॥ याशेषजगतां योनिर्मोहिनी सर्व्वदेहिनाम् ॥ माया विवर्त्तते नित्यं सापीश्वरनियोगतः ॥ ४७ ॥ यो वै देहभृतान्देवः पुरुषः पठ्यते परः ॥ आत्मासौ वर्त्तते नित्यमीश्वरस्य नियोगतः ॥ ४८ ॥ विधूय मोहकलिलं यया पश्यति तत्पदम् ॥ सापि बुद्धिर्महेशस्य नियोगवशवर्त्तिनी ॥ ४९ ॥ बहुनात्र किमुक्तेन मम शक्त्यात्मकं जगत् ॥ मयैव प्रेर्य्यते कृत्स्नं मय्येव प्रलयं व्रजेत् ॥ ५० ॥ अहं हि भगवानीशः स्वयं ज्योतिः सनातनः ॥ परमात्मा परं ब्रह्म मत्तो ह्यन्यो न विद्यते ॥ ५१ ॥ इत्येतत्परमं ज्ञानं युष्माकं कथितं मया ॥ ज्ञात्वा विमुच्यते जन्तुर्जन्मसंसारबन्धनात् ॥ ५२ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे षष्ठोऽध्यायः ॥ ६ ॥ ईश्वर उवाच ॥ शृणुध्वमृषयः सर्व्वे प्रभावं परमेष्ठिनः ॥ यं ज्ञात्वा पुरुषो मुक्तो न संसारे पतेत्पुनः ॥ १ ॥ परात्परतरं ब्रह्म शाश्वतं ध्रुवमव्ययम् ॥ नित्यानन्दं निर्विकल्पं तद्धाम परमं मम ॥ २ ॥ अहं ब्रह्मविदां ब्रह्मा स्वयम्भूर्विश्वतोमुखः ॥ मायाविनामहन्देवः पुराणो हरिरव्ययः ॥ ३ ॥ योगिनामस्म्यहं शम्भुः स्त्रीणान्देवी गिरीन्द्रजा ॥ आदित्यानामहं विष्णुर्वसूनामस्मि पावकः ॥ ४ ॥ रुद्राणां शङ्करश्चाहं गरुडः पततामहम् ॥ ऐरावतो गजेन्द्राणां रामः शस्त्रभृतामहम् ॥ ५ ॥



१ मच्छास्त्रेणैव निष्ठिता इति पा० । २ गरुडा ऋक्षाः इति, गरुडाः पक्षा इति पा० । ३ नियमा देवेति पा० । ४ मयोढानीति, त्वयोढानीति पा० । ५ वस्तुभिरिति पा० । ६ वहिष्यन्तीति पा० । ७ महेश्वरेति पा० । ८ मय्येव युज्यते इति पा० । ९ निष्कलं परमिति पा० ।

ऋषीणाञ्च वसिष्ठोऽहं देवानाञ्च शतक्रतुः ॥ शिल्पिनां विश्वकर्म्माहं प्रह्लादः सुरविद्विषाम् ॥ ६ ॥ मुनीनामप्यहं व्यासो गणानाञ्च विनायकः ॥ वीराणां वीरभद्रोऽहं सिद्धानां कपिलो मुनिः ॥ ७ ॥ पर्व्वतानामहं मेरुर्नक्षत्राणाञ्च चन्द्रमाः ॥ वज्रम्प्रहरणानाञ्च व्रतानां सत्यमस्म्यहम् ॥ ८ ॥ अनन्तो भोगिनान्देवः सेनानीनाञ्च पावकिः ॥ आश्रमाणां गृहस्थोऽहमीश्वराणां महेश्वरः ॥ ९ ॥ महाकल्पश्च कल्पानां युगानाङ्कृतमस्म्यहम् ॥ कुबेरः सर्व्वयक्षाणां तृणानाञ्चैव वीरुधः ॥ १० ॥ प्रजापतीनान्दक्षोऽहं निर्ऋतिः सर्व्वरक्षसाम् ॥ वायुर्बलवतामस्मि द्वीपानां पुष्करोऽस्म्यहम् ॥ ११ ॥ मृगेन्द्राणाञ्च सिंहोहं यन्त्राणां धनुरेव च ॥ वेदानां सामवेदोहं यजुषां शतरुद्रियम् ॥ १२ ॥ सावित्री सर्व्वजप्यानां गुह्यानां प्रणवोऽस्म्यहम् ॥ सूक्तानां पौरुषं सूक्तं ज्येष्ठसाम च सामसु ॥ १३ ॥ सर्व्ववेदार्थविदुषां मनुः स्वायम्भुवोऽस्म्यहम् ॥ ब्रह्मावर्त्तस्तु देशानां क्षेत्राणामविमुक्तकम् ॥ १४ ॥ विद्यानामात्मविद्याहं ज्ञानानामैश्वरं परम् ॥ भूतानामस्म्यहं व्योम तत्त्वानां मृत्युरेव च ॥ १५ ॥ पाशानामस्म्यहं माया कालः कल[illegible]महम् ॥ गतीनां मुक्तिरेवाहं परेषां परमेश्वरः ॥ १६ ॥ यच्चान्यदपि लोकेऽस्मिन् सत्त्वं तेजोबलाधिकम् ॥ तत्सर्व्वं प्रतिजानीध्वं मम तेजोविजृम्भितम् ॥ १७ ॥ आत्मानः पशवः प्रोक्ताः सर्व्वे संसारवर्त्तिनः ॥ तेषां पतिरहन्देवः स्मृतः पशुपतिर्बुधैः ॥ १८ ॥ मायापाशेन बध्नामि पशूनेतान् स्वलीलया ॥ मामेव मोचकं प्राहुः पशूनां वेदवादिनः ॥ १९ ॥ मायापाशेन बद्धानां मोचकोऽन्यो न विद्यते ॥ मामृते परमात्मानं भूताधिपतिमव्ययम् ॥ २० ॥ चतुर्विंशतितत्त्वानि माया कर्म्म गुणा इति ॥ एते पाशाः पशुपतेः क्लेशाश्च पशुबन्धनाः ॥ २१ ॥ मनो बुद्धिरहङ्कारः खानिलाग्निजलानि भूः ॥ एताः प्रकृतयस्त्वष्टौ विकाराश्च तथापरे ॥ २२ ॥ श्रोत्रन्त्वक् चक्षुषी जिह्वा घ्राणञ्चैव तु पञ्चमम् ॥ पायूपस्थं करौ पादौ वाक् चैव दशमी मता ॥ २३ ॥ शब्दः स्पर्शश्च रूपञ्च रसो गन्धस्तथैव च ॥ त्रयोविंशतिरेतानि तत्त्वानि प्राकृतानि च ॥ २४ ॥ चतुर्विंशकमव्यक्तं प्रधानं गुणलक्षणम् ॥ अनादिमध्यनिधनं कारणं जगतः परम् ॥ २५ ॥ सत्त्वं रजस्तमश्चेति गुणत्रयमुदाहृतम् ॥ साम्यावस्थितिमेतेषामव्यक्तां प्रकृतिं विदुः ॥ २६ ॥ सत्त्वं ज्ञानं तमो ज्ञानं राजसं समुदाहृतम् ॥ गुणानां बुद्धिवैषम्याद्वैषम्यं कवयो विदुः ॥ २७ ॥ धर्म्माधर्म्माविति प्रोक्तौ पाशौ द्वौ कर्म्मसंज्ञितौ ॥ मय्यर्पितानि कर्म्माणि न बन्धाय विमुक्तये ॥ २८ ॥ अविद्यामस्मितां रागं द्वेषञ्चाभिनिवेशनम् ॥

१ प्रह्लादोऽस्म्यमरद्विषामिति पा० । २ गणेशानाञ्च वीरुकः इति पा० । ३ ईश्वरः परमिति पा० । ४ विजृम्भणमिति पा० । ५ रजोमिश्रमुदाहृतमिति पा० ।

क्लेशाख्यांस्तान् स्वयं प्राह पाशानात्मनिबन्धनात् ॥ २९ ॥ एतेषामेव पाशानां माया कारणमुच्यते ॥ मूलप्रकृतिरव्यक्ता सा शक्तिर्मयि तिष्ठति ॥ ३० ॥ स एव मूलप्रकृतिः प्रधानं पुरुषोऽपि च ॥ विकारा महदादीनि देवदेवः सनातनः॥३१॥ स एव बन्धः स च बन्धकर्त्ता स एव पाशः पशुभृत्स एव ॥ स वेद सर्व्वन्न च तस्य वेत्ता तमाहुराद्यं पुरुषं पुराणम् ॥ ३२ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे सप्तमोऽध्यायः ॥ ७ ॥ ईश्वर उवाच ॥ अन्यद्गुह्यतमं ज्ञानं वक्ष्ये ब्राह्मणपुङ्गवाः॥ येनासौ तरते जन्तुर्घोरं संसारसागरम् ॥ ॥ १ ॥ अयं ब्रह्मा तमः शान्तः शाश्वतो निर्म्मलोऽव्ययः ॥ एकाकी भगवानुक्तः केवलः परमेश्वरः ॥ २ ॥ मम योनिर्महद्ब्रह्म तत्र गर्भं दधाम्यहम्॥मूलमायाभिधानन्तं ततो जातमिदं जगत् ॥ ३ ॥ प्रधानं पुरुषो ह्यात्मा महद्भूतादि रेव च ॥ तन्मात्राणि मनोभूतानीन्द्रियाणि च जज्ञिरे ॥ ४ ॥ ततोऽण्डमभवद्धैममर्ककोटिसमप्रभम् ॥ तस्मिञ्जज्ञे महाब्रह्मा मच्छक्त्या चोपबृंहितः ॥ ५ ॥ ये चान्ये बहवो जीवास्तन्मयाः सर्वे एव ते ॥ न मां पश्यन्ति पितरं मायया मम मोहिताः ॥६॥ यासु योनिषु ताः सर्व्वाः सम्भवन्तीह मूर्त्तयः ॥ तां मातरं परां योनिंमामेव पितरं विदुः ॥७॥ यो मामेवं विजानाति बीजिनं पितरं प्रभुम् ॥ स वीरः सर्व्वलोकेषु न मोहमधिगच्छति ॥ ८ ॥ ईशानः सर्व्वविद्यानां भूतानां परमेश्वरः ॥ ओङ्कारमूर्त्तिर्भगवानहं ब्रह्मा प्रजापतिः ॥ ९ ॥ समं सर्व्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥ विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ १० ॥ समं पश्यन् हि सर्व्वत्र समवस्थितमीश्वरम् ॥ न हिनस्त्यात्मनात्मानं ततो याति पराङ्गतिम् ॥ ११ ॥ विदित्वा सप्त सूक्ष्माणि षडङ्गञ्च महेश्वरम् ॥ प्रधानविनियोगज्ञः परं ब्रह्माधिगच्छति ॥ १२ ॥ सर्व्वज्ञता तृप्तिरनादिबोधः स्वच्छन्दता नित्यमलुप्तशक्तिः ॥ अनन्तशक्तिश्च विभोर्विदित्वा षडाहुरङ्गानि महेश्वरस्य ॥ १३ ॥ तन्मात्राणि मन आत्मा च तानि सूक्ष्माण्याहुः सप्त तत्त्वात्मकानि ॥ या सा हेतुः प्रकृतिः सा प्रधानं बन्धः प्रोक्तो विनयेनापि तेन ॥ १४ ॥ या सा शक्तिः प्रकृतौ लीनरूपा वेदेषूक्ता कारणं ब्रह्मयोनिः ॥ तस्या एकः परमेष्ठी पुरस्तान्माहेश्वरः पुरुषः सत्यरूपः ॥ १५ ॥ ब्रह्मा योगी परमात्मा महीयान् व्योमव्यापी वेदवेद्यः पुराणः ॥ एको रुद्रो मृत्युमव्यक्तमेकं बीजं विश्वं देव एकः स एव ॥ १६ ॥ तमेवैकं प्राहुरन्येऽप्यनेकं त्वामेवात्मा केचिदन्यं तमाहुः ॥ अणोरणीयान्महतो महीयान्महादेवः प्रोच्यते विश्वरूपः ॥ १७ ॥ एवं हि यो वेद गुहाशयं परं प्रभुं पुराणं



१ पाशाः पशवः स इति पा० । २ अहमिति, अहं ब्रह्ममयः इति पा० । ३ महान् भूतादिरिति पा० । ४ तासां माया परा योनिरिति पा० । ५ मायामेवमिति पा० । ६ परं पदमिति पा० । ७ स्वतन्त्रता इति पा० । ८ विनियोगोऽपि इति पा० । ९ त्वेकात्मानमिति पा० । १० वेदविद्भिरिति पा० । ११ परमिति ।

पुरुषं विश्वरूपम् ॥ हिरण्मयं बुद्धिमतां पराङ्गतिं स बुद्धिमान्[1] बुद्धिमतीत्य तिष्ठति ॥ १८ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे अष्टमोऽध्यायः ॥ ८ ॥ ॥ ऋषय ऊचुः ॥ निष्कलो निर्म्मलो नित्यो निष्क्रियः परमेश्वरः ॥ ततो वद महादेव विश्वरूपः कथं भवान् ॥ १ ॥ ईश्वर उवाच ॥ नाहं विश्वो न विश्वञ्च मामृते विद्यते द्विजाः ॥ माया निमित्तमात्रास्ति सा चात्मनि मया श्रिता ॥ २ ॥ अनादिनिधना शक्तिर्माया व्यक्तिसमाश्रया[2] ॥ तन्निमित्तः प्रपञ्चोऽयमव्यक्ताज्जायते खलु[3] ॥ ३ ॥ अव्यक्तं कारणं प्राहुरानन्दं ज्योतिरक्षरम् ॥ अहमेव परं ब्रह्म मत्तोह्यन्यन्न[4] विद्यते ॥ ४ ॥ तस्मान्मे विश्वरूपत्वं निश्चितं ब्रह्मवादिभिः ॥ एकत्वे च पृथक्त्वे च प्रोक्तमेतन्निदर्शनम् ॥ ५ ॥ अहं तत्परमं ब्रह्म परमात्मा सनातनः ॥ अकारणं द्विजाः प्रोक्ता न दोषो ह्यात्मनस्तथा ॥ ६ ॥ अनन्ताः शक्तयोऽव्यक्ता मायया संस्थिता ध्रुवाः ॥ तस्मिन्दिवि स्थितं नित्यमव्यक्तं भाति केवलम् ॥ ७ ॥ अभिन्नं वक्ष्यते भिन्नं ब्रह्माव्यक्तं सनातनम् ॥ एकया मायया युक्तमनादिनिधनं ध्रुवम् ॥ ८ ॥ पुंसोऽन्याभूद्यथा भूतिरन्यया न तिरोहितम् ॥ अनादिमध्यन्तिष्ठन्तं चेष्टते विद्यया किल ॥ ९ ॥ तदेतत्परमव्यक्तं प्रभामण्डलमण्डितम् ॥ तदक्षरं परं ज्योतिस्तद्विष्णोः परमं पदम् ॥ १० ॥ तत्र सर्व्वमिदं प्रोतमोतं चैवाखिलं जगत् ॥ तदेवेदं जगत्कृत्स्नं तद्विज्ञाय विमुच्यते ॥ ११ ॥ यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह ॥ आनन्दं ब्रह्मणो विद्वान् बिभेति न कुतश्चन[5] ॥ १२ ॥ वेदाहमेतं पुरुषं महान्तमादित्यवर्णं पुरुषं पुरस्तात्[6] ॥ तं विज्ञाय परिमुच्येत विद्वान्नित्यानन्दी भवति ब्रह्मभूतः ॥ १३ ॥ अस्मात्परं नापरमस्ति किञ्चिद्यज्ज्योतिषां ज्योतिरेकं दिविस्थम् ॥ तदेवात्मानं मन्यमानोऽथ विद्वानात्मानन्दी भवति ब्रह्मभूतः ॥ १४ ॥ तदप्यहं कलिलं गूढ़देहं ब्रह्मानन्दममृतं विश्वधामा ॥ वदन्त्येवं ब्राह्मणा ब्रह्मनिष्ठा यत्र गत्वा न निवर्तेत भूयः ॥ १५ ॥ हिरण्मये परमाकाशतत्त्वे यद्वै[7] दिवि विप्रतिभातीव तेजः ॥ तद्विज्ञाने[8] परिपश्यन्ति धीरा विभ्राजमानं विमलं व्योमधाम ॥ १६ ॥ ततः परम्परिपश्यन्ति धीरा आत्मन्यात्मानमनुभूय साक्षात् ॥ स्वयं प्रभुः परमेष्ठी महीयान् ब्रह्मानन्दी भगवानीश[9] एषः ॥ १७ ॥ एको देवः सर्व्वभूतेषु गूढः सर्व्वव्यापी सर्व्वभूतान्तरात्मा ॥ तमेवैकं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ १८ ॥ सर्व्वायनशिरोग्रीवः सर्व्वभूतगुहाशयः ॥ सर्व्वव्यापी स भगवान्तस्माद्

---

१ अबुद्धिमानिति पा० । २ व्यक्तसमाश्रिता इति, व्यक्तसमाश्रया इति पा० । ३ मव्यक्तादभवद् खलु इति पा० । ४ मत्तोऽन्यद्धि इति पा० । ५ न बिभेति कदाचनेति पा० । ६ तमसः परस्तादिति पा० । ७ यदर्चिषीति पा० । ८ तद्विज्ञानेन इति पा० । ९ भवानीश इति पा० ।

न्यत्र विद्यते॥१९॥इत्येतदीश्वरज्ञानमुक्तं वो मुनिपुंगवाः ॥ गोपनीयं विशेषेण योगिनामपि दुर्लभम्॥२०॥ इति श्रीकूर्म्म० उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिनारदसंवादे नवमोध्यायः ॥९॥ ईश्वर उवाच ॥ अलिंगमेकमव्यक्तलिंगं ब्रह्मेति निश्चितम् ॥ स्वयञ्ज्योतिः परन्तत्त्वं पूर्व्वे व्योम्नि व्यवस्थितम् ॥१॥ अव्यक्तं कारणं यत्तदक्षरं परमं पदम् ॥ निर्गुणं सिद्धिविज्ञानं तद्वै पश्यन्ति सूरयः ॥२॥ तन्नष्टस्वान्तसङ्कल्पा[1] नित्यं तद्भावभाविताः ॥ पश्यन्ति तत्परं ब्रह्म यत्तल्लिंगमिति श्रुतिः॥३॥ अन्यथा न हि मां द्रष्टुं शक्यं वै मुनिपुंगवाः ॥ न हि तद्विद्यते ज्ञानं येन तज्ज्ञायते[2] परम्॥४॥एतत्तत्परमं स्थानं[3] केवलं कवयो विदुः॥अज्ञानतिमिरं[4] ज्ञानं यस्मान्मायामयं जगत् ॥ ५ ॥ यज्ज्ञानं निर्म्मलं शुद्धं निर्विकल्पन्निरञ्जनम् ॥ ममात्मासौ तदेवैन[5]मिति प्राहुर्विपश्चितः ॥ ६ ॥ येऽप्यनेकं प्रपश्यन्ति तत्परं परमं पदम् ॥ आश्रिताः परमान्निष्ठां बुद्धैक्यं[6] तत्त्वमव्ययम् ॥ ७ ॥ ये पुनः परमन्तत्त्वमेकं वानेकमीश्वरम् ॥ भक्त्या मां सम्प्रपश्यन्ति विज्ञेयास्ते तदात्मकाः ॥ ८ ॥ साक्षादेवं प्रपश्यन्ति स्वात्मानं परमेश्वरम् ॥ नित्यानन्दं निर्विकल्पं सत्यरूपमिति स्थितिः ॥ ९ ॥ भजन्ते परमानन्दं सर्व्वगं जगदात्मकम् ॥ स्वात्मन्यवस्थिताः शान्ताः परे व्यक्ता[8]परस्य तु ॥ १० ॥ एषा विमुक्तिः परमा मम सायुज्यमुत्तमम् ॥ निर्व्वाणं ब्रह्मणा चैक्यं कैवल्यं कवयो विदुः ॥ ११ ॥ तस्मादनादिमध्यान्तं वस्त्वेकं परमं शिवम् ॥ स ईश्वरो महादेवस्तं विज्ञाय प्रमुच्यते ॥ १२ ॥ न तत्र सूर्यः प्रतिभातीह चन्द्रो नक्षत्राणां गणो नोत विद्युत् ॥ तद्भासितं ह्यखिलम्भाति विश्वमतीव भासममलन्तद्विभाति ॥ १३ ॥ विश्वोदितान्निष्कलं[10] निर्व्विकल्पं शुद्धं बृहत्परं[11]मं यद्विभाति ॥ अत्रान्तरे ब्रह्मविदोऽथ नित्यं पश्यन्ति तत्त्वमचलं यत्स ईशः ॥ १४ ॥ नित्यानन्दममृतं सत्यरूपं शुद्धं वदन्ति पुरुषं सर्व्ववेदाः ॥ प्राणानिति प्रणविनेशितारं ध्यायन्ति वेदैरिति निश्चितार्थाः[12] ॥ १५ ॥ न भूमिरापो न मनो न वह्निः प्राणोऽनिलो गगनं नोत बुद्धिः ॥ न चेतनोऽन्यत्परमाकाशमध्ये विभाति देवः शिव एव केवलः ॥ १६ ॥ इत्येतदुक्तं परमं रहस्यं ज्ञानञ्चेदं सर्व्ववेदेषु गीतम्[13] ॥ जानाति योगी विजनेऽथ देशे[14] युञ्जीत योगं प्रयतो ह्यजस्रम्॥१७॥इति श्रीकूर्म्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सुब्रह्मविद्यायां योगशास्त्रे ऋषिनारदसंवादे दशमोऽध्यायः॥१०॥ईश्वर उवाच ॥

१ तन्निष्ठाः शान्तसङ्कल्पा इति पा० । २ यतस्तज्ज्ञायते इति पा०। ३ ज्ञानमिति पा०। ४ अज्ञानमितरज्ज्ञानमिति पा०। इतरदिति साधु। ५ तदेवेदमिति पा०। एनदिति साधु। ६ बुद्ध्यैकमिति पा०। ७ यत्सदात्मकमिति, यत्तदात्मकमिति पा० । ८ परव्यक्ते परस्य तु इति पा० । ९ नक्षत्रतारातपनश्च विद्युदिति पा० । १० नित्योदितं सामदमिति पा०। ११ शुभ्रं विशस्तं परमामिति पा०। १२ वेदार्थविनिश्चितार्थमिति पा० । १३ गूढमिति पा० । १४ यदेवमिति पा० ।

अतः परं प्रवक्ष्यामि योगं परमदुर्लभम् ॥ येनात्मानं प्रपश्यन्ति भानुमन्तमिवेश्वरम् ॥ १ ॥ योगाग्निर्दहते क्षिप्रमशेषं पापपञ्जरम् ॥ प्रसन्नं जायते ज्ञानं साक्षान्निर्वाणसिद्धिदम् ॥ २ ॥ योगात्संजायते ज्ञानं ज्ञानाद्योगः प्रवर्त्तते ॥ योगज्ञानाभियुक्तस्य प्रसीदति महेश्वरः ॥ ३ ॥ एककालं द्विकालं वा त्रिकालं नित्यमेव च ॥ ये युञ्जन्ति महायोगं ते विज्ञेया महेश्वराः ॥ ४ ॥ योगस्तु द्विविधो ज्ञेयो ह्यभावः प्रथमो मतः ॥ अपरस्तु महायोगः सर्व्वयोगोत्तमोत्तमः ॥ ५ ॥ शून्यं सर्व्वनिराभासं स्वरूपं यत्र चिन्त्यते ॥ अभावयोगः स प्रोक्तो येनात्मानं प्रपश्यति ॥ ६ ॥ यत्र पश्यति चात्मानं नित्यानन्दं निरञ्जनम् ॥ मयैक्यं स मया योगो भाषितः परमः स्वयम् ॥ ७ ॥ ये चान्ये योगिनां योगाः श्रूयन्ते ग्रन्थविस्तरे ॥ सर्व्वे ते ब्रह्मयोगस्य कलां नार्हन्ति षोडशीम् ॥८॥ यत्र साक्षात्प्रपश्यन्ति विमुक्ता विश्वमीश्वरम् ॥ सर्वेषामेव योगानां स योगः परमो मतः ॥ ९ ॥ सहस्रशोऽथ बहुशो ये चेश्वरबहिष्कृताः ॥ न ते पश्यन्ति मामेकं योगिनो यतमानसाः ॥ १० ॥ प्राणायामस्तथा ध्यानं प्रत्याहारोथ धारणा ॥ समाधिश्च मुनिश्रेष्ठा यमश्च नियमासने ॥११॥ मय्येकचित्तता योगः प्रत्यन्तरनियोगतः ॥ तत्साधनानि चान्यानि युष्माकं कथितानि तु ॥ १२ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ ॥ यमाः सङ्क्षेपतः प्रोक्ताश्चित्तशुद्धिप्रदा नृणाम् ॥ १३ ॥ कर्म्मणा मनसा वाचा सर्व्वभूतेषु सर्व्वदा ॥ अक्लेशजननं प्रोक्ता त्वहिंसा परमर्षिभिः ॥ १४ ॥ अहिंसायाः परो धर्म्मो नास्त्यहिंसापरं सुखम् ॥ विधिना या भवेद्धिंसा त्वहिंसैव प्रकीर्त्तिता ॥१५॥ सत्येन सर्व्वमाप्नोति सत्ये सर्व्वं प्रतिष्ठितम् ॥ यथार्थकथनाचारः सत्यम्प्रोक्तं द्विजातिभिः ॥ १६ ॥ परद्रव्यापहरणं चौर्य्यादथ बलेन वा ॥ स्तेयं तस्यानाचरणादस्तेयं धर्म्मसाधनम् ॥ १७ ॥ कर्म्मणा मनसा वाचा सर्व्वावस्थासु सर्व्वदा ॥ सर्व्वत्र मैथुनत्यागं ब्रह्मचर्य्यम्प्रचक्षते ॥ ॥ १८ ॥ द्रव्याणामप्यनादानमापद्यपि तथेच्छया ॥ अपरिग्रहमित्याहुस्तं प्रयत्नेन पालयेत् ॥ १९ ॥ तपः स्वाध्यायसन्तोषौ शौचमीश्वरपूजनम् ॥ समासान्नियमाः प्रोक्ता योगसिद्धिप्रदायिनः॥२०॥उपवासपराकादिकृच्छ्रचान्द्रायणादिभिः ॥ शरीरशोषणम्प्राहुस्तापसास्तप उत्तमम् ॥ २१॥ वेदान्तशतरुद्रीयप्रणवादिजपम्बुधाः ॥ सत्त्वसिद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥ २२ ॥ स्वाध्यायस्य त्रयो भेदा वाचिकोपांशुमानसाः ॥ उत्तरोत्तरवैशिष्ट्यं प्राहुर्वेदार्थवेदिनः ॥ २३ ॥ यः शब्दबोधजननः परेषां शृण्वतां स्फुटम् ॥ स्वाध्यायो वाचिकः प्रोक्त उपांशोरथ लक्षणम् ॥ २४ ॥

१ सत्त्वयमिति पा० । २ अनुफा सुनफा इति । ३ महायोगः इति पा० । ४ परमेश्वरः इति पा० । ५ शतशः इति पा० । ६ वृत्तान्तर इति पा० । ७ सा त्वहिंसैव कीर्त्तिता इति पा० ।

ओष्ठयोः स्पन्दमात्रेण परस्याशब्दबोधकम् ॥ उपांशुरेष निर्दिष्टः साध्वसौ वाचिकाज्जपात् ॥ २५ ॥ यत्पदाक्षरसङ्गत्या परिस्पन्दनवर्ज्जितम् ॥
चिन्तनं सर्व्वशब्दानां मानसं तज्जपं विदुः ॥२६॥ यदृच्छालाभतो वित्तं अलं पुंसो भवेदिति ॥ प्राशस्त्यमृषयः प्राहुः सन्तोषं सुखलक्षणम् ॥ २७ ॥
बाह्यमाभ्यन्तरं शौचं द्विधा प्रोक्तं द्विजोत्तमाः ॥ मृज्जलाभ्यां स्मृतं बाह्यं मनःशुद्धिरथान्तरम् ॥ २८ ॥ स्तुतिस्मरणपूजाभिर्वाङ्मनःकायकर्म्मभिः ॥
सुनिश्चला शिवे भक्तिरेतदीशस्य पूजनम् ॥२९॥ यमाश्च नियमाः प्रोक्ताः प्राणायामन्निबोधत ॥ प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ॥ ३० ॥
उत्तमाधममध्यत्वात्त्रिधायं प्रतिपादितः ॥ य एव द्विविधः प्रोक्तः सगर्भोऽगर्भ एव च ॥ ३१ ॥ मात्राद्वादशको मन्दश्चतुर्विंशतिमात्रकः ॥ मध्यमः
प्राणसंरोधः षट्त्रिंशन्मात्रिकोऽन्तकः ॥ ३२ ॥ यः स्वेदकम्पनोच्छ्वासजनकस्तु यथाक्रमम् ॥ संयोगश्च मनुष्याणामानन्दाच्चोत्तमोत्तमः ॥ ३३ ॥
सुनफाख्यं हि तं योगं सगर्भविजयम्बुधाः ॥ एतद्वै योगिनां प्राहुः प्राणायामस्य लक्षणम् ॥ ३४ ॥ सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ॥
त्रिर्जपेदायतप्राणः प्राणायामोऽथ नामतः ॥ ३५ ॥ रेचकः पूरकश्चैव प्राणायामोऽथ कुम्भकः ॥ प्रोच्यते सर्व्वशास्त्रेषु योगिभिर्यतमानसैः ॥ ३६ ॥
रेचको बाह्यनिश्वासः पूरकस्तन्निरोधनः ॥ साम्येन संस्थितिर्या सा कुम्भकः परिगीयते ॥ ३७ ॥ इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥
निग्रहः प्रोच्यते सद्भिः प्रत्याहारस्तु सत्तमाः ॥३८॥ हृत्पुण्डरीके नाभ्यां वा मूर्ध्नि पर्व्वसु मस्तके ॥ एवमादिषु देशेषु धारणा चित्तबन्धनम् ॥३९॥
देशावस्थितिमालम्ब्य ऊर्द्ध्वं या वृत्तिसन्ततिः ॥ प्रत्यन्तरैरसृष्टा यां तद्ध्यानं सूरयो विदुः ॥ ४० ॥ एकाकारः समाधिः स्याद्देशालम्बनवर्ज्जितः ॥
प्रत्ययो ह्यर्थमात्रेण योगशासनमुत्तमम् ॥ ४१ ॥ धारणा द्वादशायामा ध्यानं द्वादश धारणाः ॥ ध्यानं द्वादशकं यावत्समाधिरभिधीयते ॥ ४२ ॥
आसनं स्वस्तिकं प्रोक्तं पद्ममर्द्धासनन्तथा ॥ साधनानाञ्च सर्व्वेषामेतत्साधनमुत्तमम् ॥ ४३ ॥ ऊर्व्वोरुपरि विप्रेन्द्राः कृत्वा पादतले उभे ॥ समा
सीनात्मनः पद्ममेतदासनमुत्तमम् ॥ ४४ ॥ उभे कृत्वा पादतले जान्वोरन्तरेण हि ॥ समासीनात्मनः प्रोक्तमासनं स्वस्तिकं परम् ॥ ४५ ॥ एकं
पादमथैकस्मिन्विष्टभ्योरसि सत्तमाः ॥ आसीनार्द्धासनमिदं योगसाधनमुत्तमम् ॥ ४६ ॥ अदेशकाले योगस्य दर्शनं न हि विद्यते ॥ अग्न्यभ्यासे



---

१ सहस्रवाचिको जपः इति पा० । २ नित्यमिति पा० । ३ मात्रिकोत्तम इति पा० । ४ यः स्वेदकम्पनोत्थान इति पा० । ५ मन्दमध्यममुख्यानामानन्दादुत्तमोत्तम इति पा० । ६ एतद्धि योगिनामुक्तमिति पा० । ७ प्राणायामः स उच्यते इति पा० । ८ रेचकोऽनन्तनिश्वासादिति पा० । ९ बुद्धेरिति पा० । १० वृत्यन्तरैरसंस्पृष्टा इति पा० । ११ साधनेति पा० ।

जले वापि शुष्कपर्णचये तथा ॥ ४७ ॥ जन्तुव्याप्ते श्मशाने च जीर्णगोष्ठे चतुष्पथे ॥ सशब्दे सँश्रये वापि चैत्यवल्मीकसञ्चये ॥ ४८ ॥ अशुभे दुर्जनाक्रान्ते मशकादिसमन्विते ॥ नाचरेद्देहबाधे वा दौर्मनस्यादिसम्भवे ॥ ४९ ॥ सुगुप्ते सुशुभे देशे गुहायां पर्व्वतस्य च ॥ नद्यास्तीरे पुण्यदेशे देवतायतने तथा ॥ ५० ॥ गृहे वा सुशुभे देशे निर्ज्जने जन्तुवर्जिते ॥ युञ्जीत योगं सततमात्मानं तत्परायणः ॥ ५१ ॥ नमस्कृत्याथ योगीन्द्रा न्छिष्यांश्चैव विनायकम् ॥ गुरुञ्चैव च मां योगी युञ्जीत सुसमाहितः ॥ ५२ ॥ आसनं स्वस्तिकं वद्ध्वा पद्ममर्द्धमथापि वा ॥ नासिकाग्रे समां दृष्टि मीषदुन्मीलितेक्षणः ॥ ५३ ॥ कृत्वाथ निर्भयः शान्तस्त्यक्त्वा मायामयं जगत ॥ स्वात्मन्यवस्थितन्देवं चिन्तयेत्परमेश्वरम् ॥ ५४ ॥ शिखाग्रे द्वादशाङ्गुल्ये कल्पयित्वाथ पङ्कजम् ॥ धर्म्मकन्दसमुद्भूतं ज्ञानेनालं सुशोभनम् ॥ ५५ ॥ ऐश्वर्य्याष्टदलं श्वेतं परं वैराग्यकर्णिकम् ॥ चिन्तयेत्परमं कोशं कर्णिकायां हिरण्मयम् ॥ ५६ ॥ सर्व्वशक्तिमयं साक्षाद्यं प्राहुर्दिव्यमव्ययम् ॥ ओङ्कारवाच्यमव्यक्तं रश्मिज्वालासमाकुलम् ॥ ५७ ॥ चिन्तये त्तत्र विमलं परं ज्योतिर्यदक्षरम् ॥ तस्मिञ्ज्योतिषि विन्यस्य स्वानन्दं मम भेदतः ॥ ५८ ॥ ध्यायीत कोशमध्यस्थमीशं परमकारणम् ॥ तदात्मा सर्व्वगो भूत्वा न किञ्चिदपि चिन्तयेत् ॥५९॥ एतद्गुह्यतमं ज्ञानं ध्यानान्तरमथोच्यते ॥ चिन्तयित्वा तु पूर्वोक्तं हृदये पद्ममुत्तमम् ॥६०॥ आत्मानमथ कर्त्तारं तत्रानलसमत्विषम् ॥ मध्ये वह्निशिखाकारं पुरुषं पञ्चविंशकम् ॥ ६१ ॥ चिन्तयेत्परमात्मानं तन्मध्ये गगनं परम् ॥ ओं कारबोधितं तत्त्वं शाश्वतं शिवमुच्यते ॥ ६२ ॥ अव्यक्तं प्रकृतौ लीनं परं ज्योतिरनुत्तमम् ॥ तदन्तः परमं तत्त्वमात्माधारं निरञ्जनम् ॥ ६३ ॥ ध्यायीत तन्मयो नित्यमेकरूपं महेश्वरम् ॥ विशोध्य सर्व्वतत्त्वानि प्रणवेनाथवा पुनः ॥ ६४ ॥ संस्थाप्यमपि चात्मानं निर्म्मले परमे पदे ॥ पाव यित्वात्मनो देहं तेनैव ज्ञानवारिणा ॥ ६५ ॥ मदात्मा मन्मना भस्म गृहीत्वा त्वग्निहोत्रिकम् ॥ तेनोद्धूलितसर्व्वाङ्गमग्निरादित्यमन्त्रतः ॥ ६६ ॥ चिन्तयेत्स्वात्मनीशानं परं ज्योतिःस्वरूपिणम् ॥ एष पाशुपतो योगः पशुपाशविमुक्तये ॥ ६७ ॥ सर्व्ववेदान्तमार्गोऽयमत्याश्रममिति श्रुतिः ॥ एतत्परतरं गुह्यं मत्सायुज्यप्रदायकम् ॥ ६८ ॥ द्विजातीनान्तु कथितं भक्तानां ब्रह्मचारिणाम् ॥ ब्रह्मचर्य्यमहिंसा च क्षमा शौचन्तपो दमः ॥ ६९ ॥ सन्तोषः सत्यमास्तिक्यं व्रताङ्गानि विशेषतः ॥ एकेनाप्यथ हीनेन व्रतमस्य न लुप्यते ॥ ७० ॥ तस्मादात्मगुणोपेतो मद्व्रतं वोढुमर्हे

१ सभये इति पा० । २ रम्ये इति पा० । ३ योगीति पा० । ४ मत्परायण इति पा० । ५ जालेति पा० । ६ स्वात्मानं तदभेदत इति, स्वात्मानन्दमभेदत इति पा० । ७ ध्यायीताकाशेतिपा० । ध्यायीत—अत्र आत्मनेपदित्वमार्षम् । ८ कर्तारमिति पा० । ९ शिवमच्युतमिति पा० । १० अनन्तमिति पा० । ११ त्वग्निहोत्रजमिति पा० । १२ सारोऽयमिति पा० ।

ति ॥ वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥ ७१ ॥ बहवोऽनेन योगेन पूता मद्भावयोगतः ॥ ७२ ॥ ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥ ७२ ॥ ज्ञानयोगेन मां तस्माद्यजेत परमेश्वरम् ॥ अथवा भक्तियोगेन वैराग्येण परेण तु ॥ ७३ ॥ चेतसा बोधयुक्तेन पूजयेन्मां सदा शुचिः ॥ सर्व्वकर्म्माणि संन्यस्य भिक्षाशी निष्परिग्रहः ॥ ७४ ॥ प्राप्नोति मम सायुज्यं गुह्यमेतन्मयोदितम् ॥ अद्वेष्टा सर्व्वभूतानां मैत्रीकरण एव च ॥ ७५ ॥ निर्म्ममो निरहङ्कारो यो मद्भक्तः स मे प्रियः ॥ सन्तुष्टः सततं योगी यतात्मा दृढनिश्चयः ॥ ७६ ॥ मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ॥ यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥ ७७ ॥ हर्षामर्षभयोद्वेगैर्मुक्तो यः स हि मे प्रियः ॥ अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥ ७८ ॥ सर्व्वारम्भपरित्यागी भक्तिमान्यः स मे प्रियः ॥ तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित् ॥ ७९ ॥ अनिकेतः स्थिरमतिर्मद्भक्तो मामुपैष्यति ॥ सर्व्वकर्म्माण्यपि सदा कुर्व्वाणो मत्परायणः ॥ ८० ॥ मत्प्रसादादवाप्नोति शाश्वतं परमं पदम् ॥ चेतसा सर्व्वकर्माणि मयि सन्यस्य मत्परः ॥ ८१ ॥ निराशीर्निर्ममो भूत्वा मामेकं शरणं व्रजेत् ॥ त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ॥ ८२ ॥ कर्मण्यपि प्रवृत्तोऽपि कर्मणा तेन बुध्यते ॥ निराशीयतचित्तात्मा त्यक्तसर्व्वपरिग्रहः ॥ ८३ ॥ शारीरं केवलं कर्म कुर्व्वन्नाप्नोति तत्पदम् ॥ यदृच्छालाभतृप्तस्य द्वन्द्वातीतस्य चैव हि ॥ ८४ ॥ कुर्व्वतो मत्प्रसादार्थं कर्म संसारनाशनम् ॥ मन्मना मन्नमस्कारो मद्याजी मत्परायणः ॥ ८५ ॥ मामुपास्यति योगीशो ज्ञात्वा मां परमेश्वरम् ॥ मामेवाहुः परं ज्योतिर्बोधयन्तः परस्परम् ॥ ८६ ॥ कथयन्तश्च मां नित्यं मम सायुज्यमाप्नुयुः ॥ एवं नित्याभियुक्तानां मायेयं कर्म सात्त्वगम् ॥ ८७ ॥ नाशयामि तमः कृत्स्नं ज्ञानदीपेन भास्वता मद्बुद्धयो मां सततं पूजयन्तीह ये जनाः ॥ ८८ ॥ तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ ये चान्ये भोगकर्मार्था यजन्ते ह्यन्यदेवताः ॥ ८९ ॥ तेषां तदन्तं विज्ञेयं देवतानुगतं फलम् ॥ ये चान्ये देवताभक्ताः पूजयन्तीह देवताः ॥ ९० ॥ मद्भावनासमायुक्ता मुच्यन्ते तेऽपि मानवाः ॥ तस्माद्विनश्वरानन्यांस्त्यक्त्वा देवानशेषतः ॥ ९१ ॥ मामेव संश्रयेदीशं स याति परमं पदम् ॥ त्यक्त्वा पुत्रादिषु स्नेहं निःशोको निष्परिग्रहः ॥ ९२ ॥ यजेच्चामरणाल्लिङ्गं विरक्तः परमेश्वरम् ॥ येऽर्चयन्ति सदा लिङ्गं त्यक्त्वा भोगानशेषतः ॥ ९३ ॥ एकेन जन्मना तेषां ददामि परमम्पदम् ॥ परात्मनः सदा लिंगं केवलं रजतप्रभम् ॥ ९४ ॥ ज्ञानात्मकं सर्व्वगतं योगिनां हृदि संस्थितम् ॥ ये चान्ये नियता भक्ता भाव

१ मद्भावमागताः इति पा० । २ नैव तेन निबध्यते इति पा० । ३ जितचित्तात्मेति पा० । ४ किल्बिषमिति पा० । ५ द्वन्द्वातीतस्य—द्वन्द्वं सुखदुःखशीतोष्णादिद्वन्द्वं तदतीतस्य इत्यर्थः । ६ उपास्ते इति साधु । मामपैष्यतीति पा० । ७ मद्बुद्धयो मां सततमिति पा० । ८ विश्वेश्वरेति पा० । ९ सन्निरञ्जनमिति पा० ।

यित्वा विधानतः ॥ ९५ ॥ यत्र क्वचन तल्लिंगमर्चयन्ति महेश्वरम् ॥ जले वा वह्निमध्ये वा व्योम्नि सूर्येऽप्यथान्यतः ॥ ९६ ॥ रत्नादौ भावयित्वे शमर्चयेल्लिंगमैश्वरम् ॥ सर्व्वंलिंगमयं ह्येतत्सर्व्वं लिंगे प्रतिष्ठितम् ॥ ९७ ॥ तस्माल्लिंगेऽर्चयेदीशं यत्र क्वचन शाश्वतम् ॥ अग्नौ क्रियावता मप्सु व्योम्नि सूर्ये मनीषिणाम् ॥ ९८ ॥ काष्ठादिष्वेव मूर्खाणां हृदि लिंगन्तु योगिनाम् ॥ यद्यनुत्पन्नविज्ञानो विरक्तः प्रीतिसंयुतः ॥ ९९ ॥ यावज्जीवं जपेद्युक्तः प्रणवं ब्रह्मणो वपुः ॥ अथवा शतरुद्रीयं जपेदामरणाद्द्विजः ॥ १०० ॥ एकाकी यतचित्तात्मा स याति परम म्पदम् ॥ वसेच्चामरणाद्विप्रा वाराणस्यां समाहितः ॥ १०१ ॥ सोऽपीश्वरप्रसादेन याति तत्परमम्पदम्[1] ॥ तत्रोत्क्रमणकाले हि सर्व्वे षामेव देहिनाम् ॥ १०२ ॥ ददाति परमं ज्ञानं येन मुच्येत बन्धनात् ॥ वर्णाश्रमविधिं कृत्स्नं कुर्वाणो मत्परायणः ॥ १०३ ॥ तेनैव जन्मना ज्ञानं लब्ध्वा याति शिवम्पदम् ॥ येऽपि तत्र वसन्तीह नीचा वै पापयोनयः ॥ १०४ ॥ सर्व्वे तरन्ति संसारमीश्वरानुग्रहाद्द्विजाः ॥ किन्तु विघ्ना भविष्यन्ति पापोपहतचेतसाम् ॥ १०५ ॥ धर्म्मान्समाश्रयेत्तस्मान्मुक्तये सततं[2] द्विजाः ॥ एतद्रहस्यं वेदानां न देयं यस्य कस्य चित् ॥ १०६ ॥ धार्म्मिकायैव दातव्यं भक्ताय ब्रह्मचारिणे ॥ व्यास उवाच ॥ इत्येतदुक्त्वा भगवान् शाश्वतो योगमुत्तमम्[3] ॥ १०७ ॥ व्याजहार समासीनं नारायणमनामयम् ॥ मयैतद्भाषितं ज्ञानं हितार्थं ब्रह्मवादिनाम् ॥ १०८ ॥ दातव्यं शान्तचित्तेभ्यः शिष्येभ्यो भवता शिवम् ॥ उक्त्वै वमर्थं योगीन्द्रानब्रवीद्भगवानजः ॥ १०९ ॥ हिताय सर्व्वभक्तानां द्विजातीनां द्विजोत्तमाः ॥ भवन्तोऽपि हि मज्ज्ञानं शिष्याणां विधिपूर्व्वकम् ॥ ॥ ११० ॥ उपदेक्ष्यन्ति भक्तानां सर्व्वेषां वचनान्मम ॥ अयं नारायणो योऽसावीश्वरो[4] नात्र संशयः ॥ १११ ॥ नान्तरं ये प्रपश्यन्ति तेषां देय मिदम्परम् ॥ ममैषा परमा मूर्त्तिर्नारायणसमाह्वया ॥ ११२ ॥ सर्व्वभूतात्मभूतस्था शान्ता चाक्षरसंस्थिता ॥ येऽन्यथा मां प्रपश्यन्ति लोके भेददृशो जनाः ॥ ११३ ॥ न ते मुक्तिं प्रपश्यन्ति जायन्ते च पुनः पुनः ॥ ये त्वेनं विष्णुमव्यक्तं माञ्च देवं महेश्वरम् ॥ ११४ ॥ एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः ॥ तस्मादनादिनिधनं विष्णुमात्मानमव्ययम् ॥ ११५ ॥ मामेव सम्प्रपश्यध्वं[5] पूजयध्वं तथैव च ॥ येऽन्यथा सम्प्र पश्यन्ति[6] मत्वैवन्देवतान्तरम् ॥ ११६ ॥ ते यान्ति नरकान् घोरान्नाहन्तेषु व्यवस्थितः ॥ मूर्खं वा पण्डितं वापि ब्राह्मणं वा मदाश्रयम् ॥ ११७ ॥

---

१ तत्परमिति पा० । २ नियतमिति पा० । ३ आत्मयोगमनुत्तममिति पा० । ४ योऽहमीश्वरः इति पा० । ५ सम्पश्यतेति साधु । ६ मां प्रपश्यन्तीति पा० ।

मोचयामि श्वपाकं वा ननारायणनिन्दकम् ॥ तस्मादेष महायोगी मद्भक्तैः पुरुषोत्तमः ॥ ११८ ॥ अर्च्चनीयो नमस्कार्य्यो मत्प्रीतिजननाय वै ॥ एवमुक्त्वा वासुदेवमालिंग्य स पिनाकधृक् ॥ ११९ ॥ अन्तर्हितोऽभवत्तेषां सर्व्वेषामेव पश्यताम् ॥ नारायणोऽपि भगवांस्तापसं वेषमुत्तमम् ॥ ॥ १२० ॥ जग्राह योगिनः सर्व्वांस्त्यक्त्वा वै परमं वपुः ॥ ज्ञानं भवद्भिरमलं प्रसादात्परमेष्ठिनः ॥ १२१ ॥ साक्षाद्देवमहेशस्य ज्ञानं संसारनाशनम् ॥ गच्छध्वं विज्वराः सर्व्वे विज्ञानं परमेष्ठिनः ॥ १२२ ॥ प्रवर्त्तयध्वं शिष्येभ्यो धार्म्मिकेभ्यो मुनीश्वराः ॥ इदं भक्ताय शान्ताय धार्म्मिकायाहिताग्नये ॥ १२३ ॥ विज्ञानमैश्वरं देयं ब्राह्मणाय विशेषतः ॥ एवमुक्त्वा स विश्वात्मा योगिनां योगवित्तमः ॥ १२४ ॥ नारायणो महायोगी जगामादर्शनं स्वयम् ॥ ऋषयस्तेऽपि देवेशं नमस्कृत्य महेश्वरम् ॥ १२५ ॥ नारायणश्च भूतादिं स्वानि स्थानानि लेभिरे ॥ सनत्कुमारो भगवान् संवर्त्ताय महामुनिः ॥ १२६ ॥ दत्तवानैश्वरं ज्ञानं सोऽपि सत्यव्रतायर्यौ ॥ सनन्दनोऽपि योगीन्द्रः पुलहाय महर्षये ॥ १२७ ॥ प्रददौ गौतमायाथ पुलहोऽपि प्रजापतिः ॥ अङ्गिरा वेदविदुषे भारद्वाजाय दत्तवान् ॥ १२८ ॥ जैगीषव्याय कपिलस्तथा पञ्चशिखाय च ॥ पराशरोऽपि सनकात्पिता मे सर्व्वतत्त्वदृक् ॥ १२९ ॥ लेभे तत्परमं ज्ञानं तस्माद्वाल्मीकिराप्तवान् ॥ ममोवाच पुरा देवः सतीदेहभवाङ्गजः ॥ १३० ॥ वामदेवो महायोगी रुद्रः कालपिनाकधृक् ॥ नारायणोऽपि भगवान्देवकीतनयो हरिः ॥ १३१ ॥ अर्जुनाय स्वयं साक्षाद्दत्तवानिदमुत्तमम् ॥ यदाहं लब्धवान्रुद्राद्वामदेवादनुत्तमम् ॥ १३२ ॥ विशेषाद्गिरिशे भक्तिस्तस्मादारभ्य मेऽभवत् ॥ शरण्यं गिरिशं रुद्रं प्रपन्नोऽहं विशेषतः ॥ १३३ ॥ भूतेशं गिरिशं स्थाणुं देवदेवं त्रिशूलिनम् ॥ भवन्तोऽपि हि तं देवं शम्भुं गोवृषवाहनम् ॥ १३४ ॥ प्रपद्यन्तां सपत्नीकाः सपुत्राः शरणं शिवम् ॥ वर्त्तध्वन्तत्प्रसादेन कर्म्मयोगेन शंकरम् ॥ १३५ ॥ पूजयध्वं महादेवं गोपतिं व्यालभूषणम् ॥ एवमुक्ते पुनस्ते तु शौनकाद्या महेश्वरम् ॥ १३६ ॥ प्रणेमुः शाश्वतं स्थाणुं व्यासं सत्यवतीसुतम् ॥ अब्रुवन् हृष्टमनसः कृष्णद्वैपायनं प्रभुम् ॥ ॥ १३७ ॥ साक्षाद्देवं हृषीकेशं शिवं लोकमहेश्वरम् ॥ भवत्प्रसादादचला शरण्ये गो वृषध्वजे ॥१३८॥ इदानीं जायते भक्तिर्या देवैरपि दुर्लभा ॥ कथयस्व मुनिश्रेष्ठ कर्म्मयोगमनुत्तमम् ॥ १३९ ॥ येनासौ भगवानीशः समाराध्यो मुमुक्षुभिः ॥ त्वत्सन्निधावेव सूतः शृणोतु भगवद्वचः ॥१४०॥ तद्वचाखिललोकानां रक्षणं धर्म्मसंग्रहम् ॥ यदुक्तं देवदेवेन विष्णुना कूर्म्मरूपिणा ॥ १४१ ॥ पृष्टेन मुनिभिः सर्व्वैः शक्रेणामृतमन्थने ॥ श्रुत्वा सत्य

१ योगमुत्तममिति पा० । २ तेऽपि देवाधिदेवेशमिति पा० । ३ सत्यव्रताय तु इति पा० । ४ पुलस्त्यायेति पा० । ५ क्षितेति पा० । ६ मुनिमिति पा० । ७ वल्लभेति पा० ।

वतीसूनुः कर्म्मयोगं सनातनम् ॥ १४२ ॥ मुनीनां भाषितं कृत्स्नं प्रोवाच सुसमाहितः ॥ य इमं पठते नित्यं संवादं कृत्तिवाससः ॥ १४३ ॥ सनत्कुमारप्रमुखैः सर्व्वपापैः प्रमुच्यते ॥ श्रावयेद्वा द्विजान् शुद्धान् ब्रह्मचर्य्यपरायणान् ॥ १४४ ॥ यो वा विचारयेदर्थं स याति परमाङ्गतिम् ॥ यश्चैतच्छृणुयान्नित्यं भक्तियुक्तो दृढव्रतः ॥ १४५ ॥ सर्व्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ तस्मात्सर्व्वप्रयत्नेन पठितव्यो मनीषिभिः ॥ १४६ ॥ श्रोतव्यश्चानुमन्तव्यो विशेषाद्ब्राह्मणैः सदा ॥ १४७ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे ईश्वरगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे एकादशोऽध्यायः ॥ ११ ॥ अथ व्यासगीताकथनम् ॥ व्यास उवाच ॥ शृणुध्वमृषयः सर्व्वे वक्ष्यमाणं सनातनम् ॥ कर्म्मयोगं ब्राह्मणानामात्यन्तिकफलप्रदम् ॥ १ ॥ आम्नायसिद्धमखिलं ब्राह्मणानां प्रदर्शितम् ॥ ऋषीणां शृण्वतां पूर्व्वं मनुराह प्रजापतिः ॥ २ ॥ सर्व्वपापहरं पुण्यं ऋषिसङ्घैर्निषेवितम् ॥ समाहितधियो यूयं शृणुध्वङ्गदतो मम ॥ ३ ॥ कृतोपनयनो वेदानधीयीत द्विजोत्तमाः ॥ गर्भाष्टमेऽष्टमे वाब्दे स्वसूत्रोक्तविधानतः ॥ ४ ॥ दण्डी च मेखली सूत्री कृष्णाजिनधरो मुनिः ॥ भिक्षाचारी ब्रह्मचारी स्वाश्रमे निवसन् सुखम् ॥ ५ ॥ कार्पासमुपवीतार्थं निर्म्मितं ब्रह्मणा पुरा ॥ ब्राह्मणानां त्रिवृत्सूत्रं कौशं वा वस्त्रमेव वा ॥ ६ ॥ सदोपवीती चैव स्यात्सदा बद्धशिखो द्विजः ॥ अन्यथा यत्कृतं कर्म्म तद्भवत्ययथाकृतम् ॥ ७ ॥ वसेदविकृतं वासः कार्पासं वा कषायकम् ॥ तदेव परिधानीयं शुक्लमच्छिद्रमुत्तमम् ॥ ८ ॥ उत्तरन्तु समाख्यातं वासः कृष्णाजिनं शुभम् ॥ अभावे दिव्यमजिनं रौरवं वा विधीयते ॥ ९ ॥ उद्धृत्य दक्षिणं बाहुं सव्ये बाहौ समर्पितम् ॥ उपवीतं भवेन्नित्यं निवीतं कण्ठसँज्जने॥ १० ॥ सव्यं बाहुं समुद्धृत्य दक्षिणे तु धृतं द्विजाः ॥ प्राचीनावीतमित्युक्तं पैत्रे कर्म्मणि योजयेत् ॥ ११ ॥ अग्न्यागारे गवां गोष्ठे होमे जप्ये तथैव च ॥ स्वाध्याये भोजने नित्यं ब्राह्मणानाञ्च सन्निधौ ॥ १२ ॥ उपासने गुरूणाञ्च सन्ध्ययोः साधुसङ्गमे ॥ उपवीती भवेन्नित्यं विधिरेष सनातनः ॥ १३ ॥ मौञ्जी त्रिवृत्समा श्लक्ष्णा कार्य्या विप्रस्य मेखला ॥ कुशेन निर्म्मिता विप्रा ग्रन्थिनैकेन वा त्रिभिः ॥ १४ ॥ धारयेद्बैल्वपालाशौ दण्डौ केशान्तकौ द्विजः ॥ यज्ञार्हवृक्षजं वाथ सौम्यमव्रणमेव च ॥ १५ ॥ सायं प्रातर्द्विजः सन्ध्यामुपासीत समाहितः ॥ कामाल्लोभाद्भयान्मोहात्त्यक्त्वैनां पतितो भवेत् ॥ १६ ॥ अग्निकार्य्यं ततः कुर्य्यात्सायम्प्रातर्यथाविधि ॥

१ श्रोतव्यश्चार्थेति पा० । २ ब्रह्मयोगमिति पा० । ३ ब्रह्मणा तूपदर्शितमिति पा० । ४ स्वगृह्योक्तेति पा० । ५ भिक्षाहारो गुरुहितो वीक्षमाणो गुरोर्मुखमिति पा० । ६ सव्यबाहाविति पा० । ७ विधिरेष सनातन इति पा० । ८ मुञ्जाभावे कुशेनाहुरिति पा० । ९ प्रसन्नधीरिति पा० ।

स्नात्वा सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥ १७ ॥ देवताभ्यर्च्चनं कुर्य्यात्पुष्पैः पत्रेण चाम्बुना ॥ अभिवादनशीलः स्यान्नित्यं वृद्धेषु धर्म्मतः ॥ १८ ॥ असावहं भो नामेति सम्यक् प्रणतिपूर्व्वकम् ॥ आयुरारोग्यसान्निध्यं द्रव्यादिपरिवर्ज्जितम् ॥ १९ ॥ आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ॥ अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरप्लुतः ॥ २० ॥ न कुर्य्याद्योऽभिवादस्य द्विजः प्रत्यभिवादनम् ॥ नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ २१ ॥ विन्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः ॥ सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥ २२ ॥ लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव वा ॥ आददीत यतो ज्ञानं तं पूर्व्वमभिवादयेत् ॥२३॥ नोदकन्धारयेद्भैक्ष्यं पुष्पाणि समिधन्तथा ॥ एवंविधानि चान्यानि न दैवाद्येषु कर्म्मसु ॥ २४ ॥ ब्राह्मणं कुशलं पृच्छेत्क्षत्रबन्धुमनामयम् ॥ वैश्यं क्षेमं समागत्य शूद्रमारोग्यमेव च ॥ २५ ॥ उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ॥ मातुलः श्वशुरश्चैव मातामहपितामहौ ॥ २६ ॥ वर्णज्येष्ठः पितृव्यश्च सर्व्वे ते गुरवः स्मृताः ॥ माता मातामही गुर्वी पितुर्मातुश्च सोदराः ॥ २७ ॥ श्वश्रूः पितामही ज्येष्ठा भ्रातृजाया गुरुस्त्रियः ॥ इत्युक्तो गुरुवर्गोऽयं मातृतः पितृतस्तथा ॥ २८ ॥ अनुवर्त्तनमेतेषां मनोवाक्कायकर्म्मभिः ॥ गुरुं दृष्ट्वा समुत्तिष्ठेदभिवाद्य कृताञ्जलिः ॥ २९ ॥ नैतैरुपविशेत्सार्द्धं विवदेतार्थकारणात् ॥ जीवितार्थमपि द्वेषाद्गुरुभिर्नैव भाषणम् ॥ ३० ॥ उदितोऽपि गुणैरन्यैर्गुरुद्वेषी पतत्यधः ॥ गुरूणामपि सर्व्वेषां पूज्याः पञ्च विशेषतः ॥ ३१ ॥ तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥ यो भावयति या सूते येन विद्योपदिश्यते ॥ ३२ ॥ ज्येष्ठो भ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः ॥ आत्मनः सर्व्वयत्नेन प्राणत्यागेन वा पुनः ॥ ३३ ॥ पूजनीया विशेषेण पञ्चैते भूतिमिच्छता ॥ यावत्पिता च माता च द्वावेतौ निर्व्विकारिणौ ॥ ३४ ॥ तावत्सर्व्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥ पिता माता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ॥ ३५ ॥ स पुत्रः सकलं धर्म्ममाप्नुयात्तेन कर्म्मणा ॥ नास्ति मातृसमो देवो नास्ति तातसमो गुरुः ॥ ३६ ॥ तयोः प्रत्युपकारो हि न कथञ्चन विद्यते ॥ तयोर्नित्यं प्रियं कुर्य्यात्कर्म्मणा मनसा गिरा ॥ ३७ ॥ न ताभ्यामननुज्ञातो धर्म्ममन्यं समाचरेत् ॥ वर्ज्जयित्वा मुक्तिफलं नित्यं नैमित्तिकं तथा ॥ ३८ ॥ धर्म्मः सारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥ सम्यगाराध्य वक्तारं विसृष्टस्तदनुज्ञया ॥ ३९ ॥ शिष्यो विद्याफलं भुङ्क्ते प्रेत्य वा पूज्यते दिवि ॥ यो भ्रातरं पितृसमं ज्येष्ठं मूर्खोऽवमन्यते ॥ ४० ॥ तेन दोषेण

१ सिध्दार्थमिति, आयुरारोग्यमन्विच्छन्निति पा० । २ येन वेत्यभिवादस्येति पा० । ३ सव्यस्तपाणिनेति पा० । ४ पुंसोऽत्रेति पा० । ५ धात्री च गुरवः इति पा० । ६ पितृतो द्विजाः इति पा० । ७ विवदेन्नात्र कारणादिति पा० । ८ मातृसमं दैवमिति पा० । ९ समाश्रयेदिति पा० । १० मेत्यानन्देति पा० ।

स प्रेत्य निरयङ्घोरमृच्छति ॥ पुंसां वर्त्मनि तिष्ठेत पूज्यो भर्त्ता च सर्व्वदा ॥ ४१ ॥ अपि मातरि लोकेऽस्मिन्नुपकाराद्धि गौरवम् ॥ ये नरा भर्त्तृ पिण्डार्थं स्वान्प्राणान् सन्त्यजन्ति हि ॥ ४२ ॥ तेषामथाक्षयाँल्लोकान् प्रोवाच भगवान्मनुः ॥ मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ॥४३॥ असावहमिति ब्रूयुः प्रत्युत्थाय यवीयसः ॥ अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ॥ ४४ ॥ भो भवत्पूर्व्वकत्वेन अभिभाषेत धर्म्मवित् ॥ अभिवाद्यश्च पूज्यश्च शिरसा वन्द्य एव च ॥ ४५ ॥ ब्राह्मणः क्षत्रियाद्यैश्च श्रीकामैः सादरं सदा ॥ नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथञ्चन ॥४६॥ ज्ञानकर्म्मगुणोपेता ये यजन्ति बहुश्रुताः ॥ ब्राह्मणः सर्व्ववर्णानां स्वस्ति कुर्य्यादिति श्रुतिः ॥ ४७ ॥ सवर्णेषु सवर्णानां काम्यमेवाभिवादनम् ॥ गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ॥ ४८ ॥ पतिरेव गुरुः स्त्रीणां सर्व्वस्याभ्यागतो गुरुः ॥ विद्या कर्म तपो बन्धुर्वित्तं भवति पञ्चमम् ॥ ४९ ॥ मान्यस्थानानि पञ्चाहुः पूर्व्वं पूर्व्वं गुरूत्तरात् ॥ एतानि त्रिषु वर्णेषु भूयांसि बलवन्ति च ॥ ५० ॥ यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥ पन्था देयो ब्राह्मणाय स्त्रियै राज्ञे ह्यचक्षुषे ॥ ५१ ॥ वृद्धाय भारभुग्नाय रोगिणे दुर्बलाय च ॥ भिक्षामाहृत्य शिष्टानां गृहेभ्यः प्रयतोऽन्वहम् ॥ ५२ ॥ निवेद्य गुरवेऽश्नीयादाचम्यतस्तदनुज्ञया ॥ भवत्पूर्व्वञ्चरेद्भैक्ष्यमुपनीतो द्विजोत्तमः ॥ ५३ ॥ भवन्मध्यन्तु राजन्यो वैश्यस्तु भवदुत्तरम् ॥ मातरं वा स्वसारं वा मातुर्वा भगिनीं निजाम् ॥ ५४ ॥ भिक्षेत भिक्षां प्रथमं या चैनं न विमानयेत् ॥ स्वजातीयगृहेष्वेव सार्व्ववर्णिकमेव वा ॥५५॥ भैक्ष्यस्य चरणं युक्तं पतितादिषु वर्ज्जितम् ॥ वेदयज्ञैरहीनानां प्रपन्नानां स्वकर्मसु ॥ ५६ ॥ ब्रह्मचारी हरेद्भैक्ष्यं गृहेभ्यः प्रयतोऽन्वहम् ॥ गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु ॥ ५७ ॥ अलाभे त्वन्यगेहानां पूर्व्वं पूर्व्वं विवर्ज्जयेत् ॥ सर्व्वं वा विचरेद्ग्रामं पूर्व्वोक्तानामसम्भवे ॥ ५८ ॥ नियम्य प्रयतो वाचं दिशस्त्वनवलोकयन् ॥ समाहृत्य तु तद्भैक्ष्यं पचेदन्नममायया ॥ ५९ ॥ भुञ्जीत प्रयतो नित्यं वाग्यतोऽनन्यमानसः ॥ भैक्ष्येण वर्त्तयेन्नित्यमेकान्नादी भवेद्व्रती ॥६०॥ भैक्ष्येण वृत्तिनो वृत्तिरुपवाससमा स्मृता ॥ पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ॥६१॥ दृष्ट्वा हृष्येत्प्रसीदेच्च ततो भुञ्जीत वाग्यतः ॥ ॥६२॥ अनारोग्यमनायुष्यमस्वर्ग्यञ्चातिभोजनम् ॥ अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्ज्जयेत् ॥६३॥ प्राङ्मुखोऽन्नानि भुञ्जीत सूर्य्याभिमुख एव वा ॥ नाद्यादुदङ्मुखो नित्यं विधिरेष सनातनः ॥ प्रक्षाल्य पाणिपादौ च भुञ्जानो द्विरुपस्पृशेत् ॥६४॥ शुचौ देशे समासीनो भुक्त्वा च द्विरुपस्पृशेत् ॥६५॥

१ चेष्टेतेति पा० । २ यद्यप्येते इति पा० । ३ पञ्चानामिति पा० । ४ भग्नायेति मग्नाय इति पा० । ५ शिष्याणामिति, सृष्टानामिति पा० । ६ वाग्यत इति पा० । ७ भैक्ष्यस्याचरणमिति पा० । ८ पतितादिविवर्जितः इति पा० । ९ मशस्तानामिति पा० । १० मतिनन्देच्च सर्व्वशः इति पा० ।

92

इति श्रीकूर्म्मपुराणे उत्तरार्द्धे व्यासगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे द्वादशोऽध्यायः॥१२॥व्यास उवाच॥भुक्त्वा पीत्वा च सुप्त्वा च स्नात्वा रथ्योपसर्पणे ॥ ओष्ठौ विलोमकौ स्पृष्ट्वा वासो विपरिधाय च ॥ १ ॥ रेतोमूत्रपुरीषाणामुत्सर्गेऽयुक्तभाषणे ॥ ष्ठीवित्वाध्ययनारम्भे कासश्वासागमे तथा ॥ २ ॥ चत्वरं वा श्मशानं वा समागम्य द्विजोत्तमः ॥ सन्ध्ययोरुभयोस्तद्वदाचान्तोऽप्याचमेत्पुनः ॥ ३ ॥ चण्डालम्लेच्छसंभाषे स्त्रीशूद्रोच्छिष्टभाषणे ॥ उच्छिष्टं पुरुषं स्पृष्ट्वा भोज्यञ्चापि तथाविधम्॥४॥आचामेदश्रुपाते वा लोहितस्य तथैव च ॥ भोजने सन्ध्ययोः स्नात्वा त्यागे मूत्रपुरीषयोः ॥ ५ ॥ आचान्तोऽप्याचमेत्सुप्त्वा सकृत्सकृदथान्यथः ॥ अग्नेर्गवामथालम्भे स्पृष्ट्वा प्रयतमेव च ॥६॥ स्त्रीणामथात्मनः स्पर्शे नीवीं वा परिधाय च ॥ उपस्पृशेज्जलञ्चान्तस्तृणं वा भूमिमेव च ॥ ७ ॥ केशानाञ्चात्मनः स्पर्शे वाससोऽक्षालितस्य च ॥ अनुष्णाभिरफेनाभिर्विशुद्धाद्भिश्च वाग्यतः ॥ ८ ॥ शौचेप्सुः सर्व्वदाचामेदासीनः प्रागुदङ्मुखः ॥ शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ॥ ९ ॥ अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥ सोपानत्को जलस्थो वा नोष्णीषी चाचमेद्बुधः ॥ १० ॥ न चैव वर्षधाराभिर्हस्तोच्छिष्टे तथा बुधः ॥ नैकहस्तार्पितजलैर्विना सूत्रेण वा पुनः ॥ ११ ॥ न पादुकासनस्थो वा बहिर्जानुकरोऽपि वा ॥ विट्शूद्रादिकरामुक्तैर्न चोच्छिष्टैस्तथैव च ॥ १२ ॥ न चैवाङ्गुलिभिः शस्तं प्रकुर्व्वन्नन्यमानसः ॥ न वर्णरसदुष्टाभिर्न चैवाप्रचुरोदकैः ॥ १३ ॥ न पाणिक्षुभिताभिर्वा न बहिष्कक्ष एव वा ॥ हृद्गाभिः पूयते विप्रः कण्ठ्याभिः क्षत्रियः शुचिः ॥ १४ ॥ प्राशिताभिस्तथा वैश्यः स्त्रीशूद्रौ स्पर्शतोऽम्भसः ॥ अङ्गुष्ठमूलरेखायां तीर्थं ब्राह्ममिहोच्यते ॥ १५ ॥ प्रदेशिन्याश्च यन्मूलं पितृतीर्थमनुत्तमम् ॥ कनिष्ठामूलतः पश्चात्प्राजापत्यं प्रचक्षते ॥ १६ ॥ अङ्गुल्यग्रे स्मृतं दैवं तद्देवार्थं प्रकीर्त्तितम् ॥ मूले वा दैवमादिष्टमाग्नेयं मध्यतः स्मृतम् ॥ १७ ॥ तदेव सौमिकं तीर्थमेवं ज्ञात्वा न मुह्यति ॥ ब्राह्मेणैव तु तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ १८ ॥ कायेन वाथ दैवेन चाथाचान्ते शुचिर्भवेत् ॥ त्रिराचामेदपः पूर्व्वं ब्राह्मणः प्रयतस्ततः ॥ १९ ॥ संवृताङ्गुष्ठमूलेन मुखं वै समुपस्पृशेत् ॥ अङ्गुष्ठानामिकाभ्यान्तु स्पृशेन्नेत्रद्वयं ततः ॥ २० ॥ तर्ज्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् ॥ कनिष्ठाङ्गुष्ठयोगेन श्रवणे समुपस्पृशेत् ॥ २१ ॥ सर्व्वा

१ रथ्यावसर्पणे इति पा० । २ भोजनेन च सन्ध्यायाः स्नात्वेति पा० । ३ दथान्यतः इति पा० । ४ स्त्रीणामथात्मसंस्पर्शे इति पा० । ५ जलं वार्द्रमिति पा० । ६ अदुष्टाभिश्च धर्म्मतः इति पा० । ७ न कुर्य्यान्नान्यमानसः इति पा० । ८ न चैव प्रदरोदकैरिति पा० । ९ स्पर्शतोऽन्ततः इति पा० । १० अङ्गुष्ठमूलान्तरितरेखायां ब्राह्ममुच्यते इति पा० । ११ दैवमादिष्टमाग्नेयमिति पा० । १२ पैत्रेण न तु वै द्विजाः इति पा० । १३ त्रिः प्राश्नीयादपः इति पा० ।

ङ्गुलीभिर्बाहू च हृदयन्तु तलेन वा ॥ नाभिः शिरश्च सर्व्वाभिरङ्गुष्ठेनाथ वा द्वयम् ॥ २२ ॥ त्रिः प्राश्नीयात्तदम्भस्तु सुप्रीतास्तेन देवताः ॥ ब्रह्मा विष्णुर्महेशश्च भवन्तीत्यनुशुश्रुम ॥ २३ ॥ गंगा च यमुना चैव प्रीयेते परिमार्ज्जनात् ॥ संस्पृष्टयोर्लोचनयोः प्रीयेते शशिभास्करौ ॥ २४ ॥ नासत्यदस्रौ प्रीयेते स्पृष्टे नासापुटद्वये ॥ श्रोत्रयोः स्पृष्टयोस्तद्वत्प्रीयेते चानिलानलौ ॥ २५ ॥ संस्पृष्टे हृदये वास्य प्रीयन्ते सर्वदेवताः ॥ मूर्ध्नि संस्पर्शनादेव प्रीतस्तु पुरुषो भवेत् ॥ २६ ॥ नोच्छिष्टं कुर्व्वते नित्यं विप्रुषोऽङ्गं नयन्ति याः ॥ दन्तान्तर्दन्तलग्नेषु जिह्वोष्ठैरशुचिर्भवेत् ॥ २७ ॥ स्पृशन्ति बिन्दवः पादौ य आचामयतः परान् ॥ भूमिकास्ते समाज्ञेया न तैरप्रयतो भवेत् ॥ २८ ॥ मधुपर्के च सोमे च ताम्बूलस्य च भक्षणे ॥ फले मूलेक्षुदण्डे च न दोषम्प्राह वै मनुः ॥ २९ ॥ प्रचुरान्नोदपानेषु यद्युच्छिष्टो भवेद्द्विजः ॥ भूमौ निक्षिप्य तद्द्रव्यमाचम्याभ्युक्षिपेत्ततः ॥ ३० ॥ तैजसं वा समादाय यद्युच्छिष्टो भवेद्द्विजः ॥ भूमौ निक्षिप्य तद्द्रव्यमाचम्याद्भिर्यते तु तत् ॥ ३१ ॥ यद्यमन्त्रं समादाय भवेदुच्छेषणान्वितः ॥ अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥ ३२ ॥ वस्त्रादिषु विकल्पः स्यान्न स्पृष्ट्वा चैवमेवं हि ॥ अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ॥ ३३ ॥ कृत्वा मूत्रं पुरीषं वा द्रव्यहस्तो न दुष्यति ॥ निधाय दक्षिणे कर्णे ब्रह्मसूत्रमुदङ्मुखः ॥ ३४ ॥ अह्नि कुर्य्याच्छकृन्मूत्रं रात्रौ चेद्दक्षिणामुखः ॥ अन्तर्द्धाय महीं काष्ठैः पत्रैर्लोष्ठैस्तृणेन वा ॥ ३५ ॥ प्रावृत्य च शिरः कुर्य्याद्विण्मूत्रस्य विसर्ज्जनम् ॥ छायाकूपनदीगोष्ठचैत्यान्तःपथि भस्मसु ॥ ३६ ॥ अग्नौ वेश्म श्मशाने च विण्मूत्रे न समाचरेत् ॥ न गोपथे न कृष्टे वा महावृक्षे न शाद्वले ॥ ३७ ॥ न तिष्ठन्वा न निर्वासा न च पर्व्वतमस्तके ॥ न जीर्णदेवायतने न वल्मीके कदाचन ॥ ३८ ॥ न ससत्त्वेषु गर्त्तेषु नागच्छन्वा समाचरेत् ॥ तुषाङ्गारकपालेषु राजमार्गे तथैव च ॥ ३९ ॥ न क्षेत्रे विमले चापि न तीर्थे न चतुष्पथे ॥ नोद्याने न समीपे वा नोपरे न पराशुचौ ॥ ४० ॥ न सोपानत्पादुको वा गन्ता यानान्तरिक्षगः ॥ न चैवाभिमुखं स्त्रीणां गुरुब्राह्मणयोर्न च ॥ ४१ ॥ न देवदेवालययोर्नद्यामपि कदाचन ॥ नदीं ज्योतींषि वीक्षित्वा न वार्य्यभिमुखोऽथ वा ॥ प्रत्यादित्यं प्रत्यनलं प्रतिसोमं तथैव च ॥ ४२ ॥ आहृत्य मृत्तिकां कूला

---

१ सर्व्वासामथ योगेनेति पा० । २ स्पृशेद्वै शिरसस्तद्वदङ्गुष्ठेनाथेति पा० । ३ प्रीतास्तेनान्यदेवताः इति पा० । ४ द्रव्यहस्त इति पा० । ५ माचम्याभ्युक्षयेदिति पा० । ६ यद्या ध्रुवमिति पा० । ७ तत्संस्पृश्याचमेदिहेति पा० । ८ न गोमये न कुम्भे इति पा० । ९ गच्छन्वा इति पा० । १० न च्छत्री नान्तरिक्षके इति पा० । ११ गवामिति पा० । १२ अपामपीति पा० । १३ वीक्ष्यंति साधु ।

ल्लेपगन्धापकर्षणात् ॥ कुर्य्यादतन्द्रितः शौचं विशुद्धैरुद्धृतोदकैः ॥ ४३ ॥ नाहरेन्मृत्तिकां विप्रः पांशुलान्न च कर्दमान् ॥ न मार्गान्नोषराद्देशा च्छौचोच्छिष्टात्तथैव च ॥ ४४ ॥ न देवायतनात्कूपाद्ग्रामादन्तर्जलात्तथा ॥ उपस्पृशेत्ततो नित्यं पूर्व्वोक्तेन विधानतः ॥ ४५ ॥ इति श्रीकूर्म्मे पुराणे उत्तरार्द्धे व्यासगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ शिष्यब्रह्मचारिणां धर्माः ॥ व्यास उवाच ॥ एवं दण्डादिभिर्युक्तः शौचाचारसमन्वितः ॥ आहूतोऽध्ययनं कुर्य्याद्वीक्षमाणो गुरोर्मुखम् ॥ १ ॥ नित्यमुद्धृतपाणिः स्यात्सन्ध्याचार समन्वितः ॥ आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ २ ॥ प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ॥ आसीनो न च तिष्ठन्वा उत्तिष्ठन्वा[3] पराङ्मुखः ॥ ३ ॥ न च शय्यासनश्चास्य सर्वदा गुरुसन्निधौ ॥ गुरोश्च चक्षुर्विषये न यथेष्टासनो भवेत् ॥ ४ ॥ नोदाहरेदस्य नाम परोक्षमपि केवलम् ॥ न चैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ ५ ॥ गुरोर्यत्र प्रतीवादो निन्दा चापि प्रवर्त्तते ॥ कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ ६ ॥ दूरस्थो नार्च्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ॥ न चैवास्योत्तरं ब्रूयात् स्थिते नासीत सन्निधौ ॥ ७ ॥ उदकुम्भं कुशान् पुष्पं समिधोऽस्याहरेत्सदा ॥ मार्जनं लेपनं नित्यमंगानां वा समाचरेत् ॥ ८ ॥ नास्य निर्माल्यशयनं पादुकोपानहावपि ॥ आक्रमेदासनं छायामासन्दीं वा कदाचन ॥ ९ ॥ साधयेद्दन्तकाष्ठादीन् कृत्यश्चास्मै निवेदयेत् ॥ अनापृच्छ्य न गन्तव्यं भवेत्प्रियहिते रतः ॥१०॥ न पादौ सारयेदस्य सन्निधाने कदाचन ॥ जृम्भाहास्यादिकश्चैव कण्ठप्रावरणं तथा ॥११॥ वर्ज्जयेत्सन्निधौ नित्यमथास्फोटतमं वर्चः॥ यथाकालमधीयीत यावन्न विमना गुरुः ॥१२॥ आसीताथ गुरोरुक्ते फलके वा समाहितः ॥ आसने शयने याने नैकस्तिष्ठेत्कदाचन ॥ १३ ॥ धावन्तमनुधावेत्तं गच्छन्तश्चानुगच्छति ॥ गोऽश्वोष्ट्रयानप्रासादप्रस्तरेषु कटेषु च ॥१४॥ नासीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥ जितेन्द्रियः स्यात्सततं वश्यात्माऽक्रोधनः शुचिः॥१५॥ प्रयुञ्जीत सदा वाचं मधुरां हितभाषिणीम् ॥ गन्धमाल्यं रसम्भव्यं शुक्रम्प्राणिविहिंसनम् ॥ १६ ॥ अभ्यङ्गश्चाञ्जनोपानच्छत्रधारणमेव च ॥ कामं लोभं भयं निद्रां गीतवादित्रनर्त्तनम् ॥ १७ ॥ द्यूतञ्जनपरीवादं स्त्रीप्रेक्षालम्भनं तथा ॥ परोपघातं पैशुन्यं प्रयत्नेन विवर्जयेत् ॥ १८ ॥

---

१ ग्रामान्न च जलात्तथेति पा० । २ उद्यतेति पा० । ३ नासीनो न च भुञ्जानो न तिष्ठन्निति पा० । ४ आसन्दी–चतुष्पादासनविशेषः । आक्रमेदासनं चास्य छायादीनिति पा० । ५ लब्धश्चास्मै इति पा० । ६ अवस्फोटनमेव चेति, बाहुस्फोटनमेव चेति पा० । ७ आसीताधो गुरोर्गच्छेदिति, आसीताधो गुरोः कूर्चे इति पा० । ८ शुक्रं–धौतधवलदुकूलमित्यर्थः । रसं कन्यां शुक्तमिति पा० । ९ आंतर्मनमिति पा० ।

उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान् ॥ आहरेद्यावदर्थानि भैक्ष्यश्चाहरहश्चरेत् ॥ १९ ॥ कृतञ्च लवणं सर्व्वं वर्ज्यं पर्य्युषितञ्च यत् ॥ अनृत्यदर्शी सततं भवेद्गीतादिनिस्पृहः ॥ २० ॥ नादित्यं वै समीक्षेत न चरेद्दन्तधावनम् ॥ एकान्तमशुचिस्त्रीभिः शूद्रान्त्यैरभिभाषणम् ॥ २१ ॥ गुरुप्रियार्थं सर्वं हि प्रयुञ्जीत न कामतः ॥ मलापकर्षणं स्नानमाचरेद्वै कथञ्चन ॥ २२ ॥ न कुर्य्यान्मानसं विप्रो गुरोस्त्यागे कदाचन ॥ मोहाद्वा यदि वा लोभात्त्यक्त्वैनं पतितो भवेत् ॥ २३ ॥ लौकिकं वैदिकञ्चापि तथाध्यात्मिकमेव च ॥ आददीत यतो ज्ञानं न तं द्रुह्येत्कदाचन ॥२४॥ गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ॥ उत्पथप्रतिपन्नस्य मनुस्त्यागं समब्रवीत् ॥ २५ ॥ गुरोर्गुरौ सन्निहिते गुरुवद्भक्तिमाचरेत् ॥ न चातिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥ २६ ॥ विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ॥ प्रतिषेधत्सु चाधर्म्माद्धितं चोपदिशत्स्वपि ॥२७॥ श्रेयस्तु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ॥ गुरुपुत्रेषु दारेषु गुरोश्चैव स्वबन्धुषु ॥ २८ ॥ बालः संमानयन्मान्यान् शिष्यो वा यज्ञकर्म्मणि ॥ अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥ २९ ॥ उत्सादनं वै गात्राणां स्नापनोच्छिष्टभोजने ॥ न कुर्य्याद्गुरुपुत्रस्य पादयोः शौचमेव च ॥ ३० ॥ गुरुवत्परिपूज्याश्च सवर्णा गुरुयोषितः ॥ असवर्णास्तु सम्पूज्याः प्रत्युत्थानाभिवादनैः ॥ ३१ ॥ अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च ॥ गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥ ३२ ॥ गुरुपत्नी तु युवती नाभिवाद्येह पादयोः ॥ कुर्वीत वन्दनं भूमावसावहमिति ब्रुवन् ॥ ३३ ॥ विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम् ॥ गुरुदारेषु सर्वेषु सतां धर्ममनुस्मरन् ॥ ३४ ॥ मातृष्वसा मातुलानी श्वश्रूश्चाथ पितृष्वसा ॥ संपूज्या गुरुपत्नी च समस्ता गुरुभार्य्यया ॥ ३५ ॥ भ्रातुर्भार्य्या च संग्राह्या सवर्णाहन्यहन्यपि ॥ विप्रस्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ॥ ३६ ॥ पितुर्भगिन्या मातुश्च ज्यायस्यां च स्वसर्य्यपि ॥ मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥ ३७ ॥ एवमाचारसंपन्नमात्मवन्तमदाम्भिकम् ॥ वेदमध्यापयेद्धर्म्मं पुराणाङ्गानि नित्यशः ॥ ३८ ॥ संवत्सरोषिते शिष्ये गुरुर्ज्ञानमनिर्द्दिशन् ॥ हरते दुष्कृतं तस्य शिष्यस्य वसतो गुरुः ॥ ३९ ॥ आचार्य्यपुत्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः ॥ सूक्तार्थदोऽरसः साधुः स्वाध्याय्यादशधर्म्मतः ॥ ४० ॥ कृतज्ञश्च तथाद्रोही मेधावी तूपकृन्नरः ॥ आप्तः प्रियोऽथविधिवत् षडध्याप्या द्विजातयः ॥४१॥ एतेषु ब्रह्मणो दानमन्यत्र च यथोदितान् ॥ आचम्य संयतो नित्यमधीयीत ह्युदङ्मुखः ॥४२॥

---

१ नाचरेदिति पा० । २ गुरूच्छिष्टं भेषजार्थमिति पा० । ३ गुरुवद्वृत्तिमिति पा० । ४ जपकर्म्मणीति पा० । ५ भूम्यामिति पा० । ६ विप्रोष्येति पा० । ७ कुर्व्वीतेति पा० । ८ अरसः—शृङ्गारादिरसहीनः रागहीन इत्यर्थः । ९ शक्तोऽन्नदोऽर्थदः साधुरिति पा० । १० शुभकृन्नर इति पा० । ११ ब्राह्मण इति पा० ।

उपसंगृह्य तत्पादौ वीक्षमाणो गुरोर्मुखम् ॥ अधीष्व भो इति ब्रूयाद्विरामस्त्विति नारभेत् ॥ ४३ ॥ अनुकूलं समासीनः पवित्रैश्चैव पावितः ॥ प्राणायामैस्त्रिभिः पूतस्तत ओंकारमर्हति ॥ ४४ ॥ ब्राह्मणः प्रणवङ्कुर्यादन्ते च विधिवद्द्विजः ॥ कुर्यादध्ययनं नित्यं ब्रह्माञ्जलिकरस्थितः ॥ ४५ ॥ सर्व्वेषामेव भूतानां वेदश्चक्षुः सनातनम् ॥ अधीयीताप्ययं नित्यं ब्राह्मण्याच्च्यवतेऽन्यथा ॥ ४६ ॥ योऽधीर्यीत ऋचो नित्यं क्षीराहुत्या सदेवताः ॥ प्रीणाति तर्पयन्त्येनं कामैस्तृप्ताः सदैव हि ॥ ४७ ॥ यजूंष्यधीते नियतं दध्ना प्रीणाति देवताः ॥ सामान्यधीते प्रीणाति घृताहुतिभिरन्वहम् ॥ ४८ ॥ अथर्वाङ्गिरसो नित्यं मध्वा प्रीणाति देवताः ॥ वेदाङ्गानि पुराणानि मांसैश्च तर्पयेत्सुरान् ॥ ४९ ॥ अपां समीपे नियतो नैत्यिकं विधिमाश्रितः ॥ गायत्रीमप्यधीयीत गत्वारण्यं समाहितः ॥ ५० ॥ सहस्रपरमान्देवीं शतमध्यां दशावराम् ॥ गायत्रीं वै जपेन्नित्यं जपयज्ञः प्रकीर्त्तितः ॥ ५२ ॥ गायत्रीञ्चैव वेदांस्तु तुलयातोलयत्प्रभुः ॥ एकतश्चतुरो वेदान् गायत्रीञ्च तथैकतः ॥ ५३ ॥ ओङ्कारमादितः कृत्वा व्याहृतीस्तदनन्तरम् ॥ ततोऽधीयीत सावित्रीमेकाग्रः श्रद्धयान्वितः ॥ ५४ ॥ पुराकल्पे समुत्पन्ना भूर्भुवः स्वः सनातनाः ॥ महाव्याहृतयस्तिस्रः सर्व्वाशुभनिवर्हणाः ॥ ५५ ॥ प्रधानं पुरुषः कालो विष्णुर्ब्रह्मा महेश्वरः ॥ सत्वं रजस्तमस्तिस्रः क्रमाद्व्याहृतयः स्मृताः ॥ ५६ ॥ ओंकारस्तत्परं ब्रह्म सावित्री स्यात्तदक्षरम् ॥ एष मन्त्रो महायोगः सारात्सार उदाहृतः ॥ ५७ ॥ योऽधीतेऽहन्यहन्येतां सावित्रीं वेदमातरम् ॥ विज्ञायार्थं ब्रह्मचारी स याति परमाङ्गतिम् ॥ ५८ ॥ गायत्री वेदजननी गायत्री लोकपावनी ॥ न गायत्र्याः परं जप्यमेतद्विज्ञाय मुच्यते ॥ ५९ ॥ श्रावणस्य तु मासस्य पौर्णमास्यां द्विजोत्तमाः ॥ आषाढ्यां प्रोष्ठपद्यां वा वेदोपाकरणं स्मृतम् ॥ ६० ॥ उत्सृज्य ग्रामनगरं मासान्विप्रोर्द्धपञ्चमान् ॥ अधीयीत शुचौ देशे ब्रह्मचारी समाहितः ॥ ६१ ॥ पुष्ये तु छन्दसाङ्कुर्याद्बहिरुत्सर्जनन्द्विजाः ॥ माघशुक्लस्य वा प्राप्ते पूर्व्वाह्णे प्रथमेहनि ॥ ६२ ॥ छन्दसां प्रीणनं कुर्य्यात् स्वेषु ऋक्षेषु वै द्विजाः ॥ वेदाङ्गानि पुराणानि कृष्णपक्षे च मानवः ॥ ६३ ॥ इमान्नित्यमनध्यायानधीयानो विवर्ज्जयेत् ॥ अध्यापनं च कुर्वाणो ह्यनध्यायान्विवर्ज्जयेत् ॥ ६४ ॥ कर्णश्रवेऽनिले रात्रौ दिवापांशुसमूहने ॥ विद्युत्स्तनितवर्षेषु महोल्कानाञ्च संप्लवे ॥ ६५ ॥ आकालिकमनध्यायमेतेष्वाह प्रजापतिः ॥ निर्घाते भूमिचलने ज्योतिषाञ्चोपसर्ज्जने ॥ ६६ ॥ एतानाकालिकान्विद्या

१ मांक्कुलं पर्य्युपासीनः इति, माक्कूले इति पा० । २ सदेवताः इति पा० । ३ मधुना इति साधु । ४ धर्म्माङ्गानीति पा० । ५ प्रयतः इति पा० । ६ विप्रोर्द्धपञ्चमान्–हे विप्राः सन्धिरार्षः । ७ छन्दांस्यूर्द्धमयोद्यम्येति, छन्दांस्यूर्द्धमतोऽभ्यस्येच्छुक्लपक्षेषु वै द्विजाः इति पा० ।

दनध्यायानृतावपि ॥ प्रादुष्कृतेष्वग्निषु तु विद्युत्स्तानितनिस्वने ॥ ६७ ॥ सज्योतिः स्यादनध्यायमनृतौ चात्र दर्शने ॥ नित्यानध्याय एव स्याद्ग्रामेषु नगरेषु च ॥ ६८ ॥ धर्म्मनैपुण्यकामानां पूतिगन्धेन नित्यशः ॥ अन्तःशवगते ग्रामे वृषलस्य च सन्निधौ ॥ ६९ ॥ अनध्यायो भुज्यमाने समवाये जनस्य च ॥ उदके मध्यरात्रे च विण्मूत्रे च विवर्जयेत् ॥ ७० ॥ उच्छिष्टः श्राद्धभुक् चैव मनसापि न चिन्तयेत् ॥ प्रतिगृह्य द्विजो विद्वानेकोद्दिष्टस्य केतनम् ॥ ७१ ॥ त्र्यहं न कीर्त्तयेद्ब्रह्म राज्ञो राहोश्च सूतके ॥ यावदेकोऽनुद्दिष्टस्य स्नेहो लेपश्च तिष्ठति ॥ ७२ ॥ विप्रस्य विपुले देहे तावद्ब्रह्म न कीर्त्तयेत् ॥ शयानः प्रौढपादश्च कृत्वा वै चावसिक्थकाम् ॥ ७३ ॥ नाधीयीतामिषं जग्ध्वा सूतकाद्यन्नमेव च ॥ नीहारे बाणपाते च सन्ध्ययोरुभयोरपि ॥ ७४ ॥ अमावास्यां चतुर्दश्यां पौर्णमास्यष्टमीषु च ॥ उपाकर्म्मणि चोत्सर्गे त्रिरात्रं क्षपणं स्मृतम् ॥७५॥ अष्टकासु त्र्यंहोरात्रमृत्वन्तासु च रात्रिषु ॥ मार्गशीर्षे तथा पौषे माघमासे तथैव च ॥ ७६ ॥ तिस्रोऽष्टकाः समाख्याताः कृष्णपक्षे तु सूरिभिः ॥ श्लेष्मान्तकस्य च्छायायां शाल्मलेर्म्मधुकस्य च ॥ ७७ ॥ कदाचिदपि नाध्येयं कोविदारकपित्थयोः ॥ समानविद्ये च मृते तथा सब्रह्मचारिणि ॥ ७८ ॥ आचार्य्ये संस्थिते वापि त्रिरात्रं क्षपणं स्मृतम् ॥ छिद्राण्येतानि विप्राणां येऽनध्यायाः प्रकीर्त्तिताः ॥ ७९ ॥ हिंसन्ति राक्षसास्तेषु तस्मादेतान्विसर्ज्जयेत् ॥ नैत्यिके नास्त्यनध्यायः सन्ध्योपासन एव च ॥ ८० ॥ उपाकर्म्मणि कर्म्मान्ते होममन्त्रेषु चैव हि ॥ एकामृचमथैकं वा यजुः सामाथ वा पुनः ॥ ८१ ॥ अष्टकाद्यास्वधीयीत मारुते चातिवायति ॥ अनध्यायस्तु नाङ्गेषु नेतिहासपुराणयोः ॥ ८२ ॥ न धर्म्मशास्त्रेष्वन्येषु पर्वाण्येतानि वर्ज्जयेत् ॥ एष धर्म्मः समासेन कीर्त्तितो ब्रह्मचारिणाम् ॥ ८३ ॥ ब्रह्मणाभिहितः पूर्व्वमृषीणां भावितात्मनाम् ॥ योऽन्यत्र कुरुते यत्नमनधीत्य श्रुतिं द्विजाः ॥ ८४ ॥ स संमूढो न सम्भाष्यो वेदबाह्यो द्विजातिभिः ॥ न वेदपाठमात्रेण सन्तुष्टो वै द्विजोत्तमाः ॥ ८५ ॥ एवमाचारहीनस्तु पङ्के गौरिव सीदति ॥ योऽधीत्य विधिवद्वेदं वेदार्थं न विचारयेत् ॥ ८६ ॥ स चान्धः शूद्रकल्पस्तु पदार्थं न प्रपद्यते ॥ यदि चात्यन्तिकं वासं कर्त्तुमिच्छति वै गुरौ ॥ ८७ ॥ युक्तः परिचरेदेनमाशरीराभिघातनात् ॥ गत्वा वनं वा विधिवज्जुहुयाज्जातवेदसम् ॥ ८८ ॥ अभ्यसेत्स तदा नित्यं ब्रह्मनिष्ठः समाहितः॥सावित्रीं शतरुद्रीयं वेदाङ्गानि विशेषतः॥अभ्यसेत्सततं युक्तो भस्मस्नानपरायणः॥८९॥एतद्विधानं परमं पुराणं वेदागमे सम्यगिहेरितञ्च॥

१ रुद्यमाने इति, नुद्यमाने इति पा० । २ राज्ञः सूतके—राज्ञः पुत्रादिजननाशौचे, राहोः सूतके—राहुग्रहणात् परमकाले इत्यर्थः । ३ विदुषः इति पा० । ४ विवर्ज्जयेदिति पा० । ५ होमान्ते इति पा० । ६ पाठमात्रावसन्नन्तु इति पा० । ७ माशरीरविमोक्षणादिति, माशरीरनिपातनादिति पा० ।

पुरा महर्षिप्रवरानुपृष्टः स्वायम्भुवो यन्मनुराह देवः ॥ ९०॥ एवमीश्वरसमर्पितान्तरो योऽनुतिष्ठति विधिं विधानवित् ॥ मोहजालमपहाय सोऽमृतं याति तत्पदमनामयं शिवम् ॥ ९१ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे व्यासगीतासू॰ ब्रह्मचारिधर्मनिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ ब्रह्मचारिणां गार्हस्थ्यधर्म्माः ॥ व्यास उवाच ॥ वेदं वेदौ तथा वेदान्विन्द्याद्वा चतुरो द्विजाः ॥ अधीत्य चाभिगम्यार्थं ततः स्नायाद्विजोत्तमाः ॥ १ ॥ गुरवे तु धनं दत्वा स्नायीत तदनुज्ञया ॥ चीर्णव्रतोऽथ शुक्तात्मा स शक्तः स्नातुमर्हति ॥ २ ॥ वैणवीन्धारयेद्यष्टिमन्तर्वासं तथोत्तरम् ॥ यज्ञोपवीतद्वितयं सोदकञ्च कमण्डलुम् ॥ ३ ॥ छत्रं चोष्णीषममलं पादुके चाप्युपानहौ ॥ रौक्मे च कुण्डले वेदं व्युतकेशनखः शुचिः ॥ ४ ॥ स्वाध्याये नित्ययुक्तः स्याद्बहिर्माल्यं न धारयेत् ॥ अन्यत्र काञ्चनाद्विप्रः न रक्तां विभृयात्स्रजम् ॥ ५ ॥ शुक्लाम्बरधरो नित्यं सुगन्धः प्रियदर्शनः ॥ न जीर्णमलवद्वासा भवेद्वै वैभवे सति ॥ ६ ॥ न रक्तमुल्बणञ्चान्यधृतं वासो न कुण्डिकाम् ॥ नोपानहौ स्रजं वाथ पादुके न प्रयोजयेत् ॥ ७ ॥ उपवीतकरान् दर्भान्तथा कृष्णाजिनानि च ॥ नापसव्यं परीदध्याद्वासो न विकृतञ्च यत् ॥ ८ ॥ आहरेद्विधिवद्दारान् सदृशानात्मनः शुभान् ॥ रूपलक्षणसंयुक्तान्योनिदोषविवर्जितान् ॥ ९ ॥ अमातृगोत्रप्रभवामसमानर्षिगोत्रजाम् ॥ आहरेद्ब्राह्मणो भार्य्यां शीलशौचसमन्विताम् ॥ १० ॥ ऋतुकालाभिगामी स्याद्यावत्पुत्रोऽभिजायते ॥ वर्जयेत्प्रतिषिद्धानि दिनानि तु प्रयत्नतः ॥ ११ ॥ षष्टचष्टमीं पञ्चदशीं द्वादशीं च चतुर्दशीम् ॥ ब्रह्मचारी भवेन्नित्यं ब्राह्मणः संयतेन्द्रियः ॥ १२ ॥ आदधीतावसथ्याग्निं जुहुयाज्जातवेदसम् ॥ व्रतानि स्नातको नित्यं पावनानि च पालयेत् ॥ १३ ॥ वेदोदितं स्वकं कर्म्म नित्यं कुर्य्यादतन्द्रितः ॥ अकुर्वाणः पतत्याशु नरकान्याति भीषणान् ॥ १४ ॥ अभ्यसेत्प्रयतो वेदं महायज्ञांश्च भावयेत् ॥ कुर्याद्गृह्याणि कर्माणि सन्ध्योपासनमेव च ॥१५॥ सख्यं समाधिकैः कुर्य्यादर्चयेदीश्वरं सदा ॥ दैवतान्यधिगच्छेत कुर्य्याद्भार्याविभूषणम् ॥ ॥ १६ ॥ न धर्म्मं ख्यापयेद्विद्वान्न पापं गूहयेदपि ॥ कुर्व्वीतात्महितं नित्यं सर्व्वभूतानुकम्पनम् ॥ १७ ॥ वयसः कर्म्मणोऽर्थस्य श्रुतस्याभिजनस्य च ॥ वेदवाग्बुद्धिसारूप्यमाचरेद्विहरेत्सदा ॥१८॥ श्रुतिस्मृत्युदितः सम्यक् साधुभिर्यश्च सेवितः ॥ तमाचारं निषेवेत नेहेतान्यत्र कर्हि चित् ॥१९॥ येनास्य पितरो याता येन याताः पितामहाः ॥ तेन यायात्सतां मार्गं तेन गच्छन्तरिष्यति॥२०॥नित्यं स्वाध्यायशीलः स्यान्नित्यं यज्ञोपवीतवान् ॥



१ वेदाङ्गांश्चतुरोऽन्यथा इति, साङ्गान्वै चतुरो द्विजः इति पा॰ । २ स्नायादिति साधु ३ तीर्णव्रतोऽथ मुक्तात्मा शक्तो वेति, चीर्णे व्रते सुयुक्तात्मा इति पा॰ । ४ उपवीतमलङ्कारमिति पा॰ । ५ समानिति पा॰ । ६ अामन्त्रीति पा॰ । ७ वर्जयेत्तां प्रयत्नेन प्रतिपिद्धदिनानि तु इति पा॰ । ८ तद्वज्जन्मनयाहनीति पा॰ । ९ उपेयादीश्वरमिति पा॰ । १० देवेति, वेषेति पा॰

सत्यवादी जितक्रोधो ब्रह्मभूयाय कल्पते ॥ २१ ॥ सन्ध्यास्नानपरो नित्यं ब्रह्मयज्ञपरायणः ॥ अनसूयी मृदुर्दान्तो गृहस्थः प्रेत्य वर्द्धते ॥ २२ ॥ वीतरागभयक्रोधो लोभमोहविवर्जितः ॥ सावित्रीजापनिरतः श्राद्धकृन्मुच्यते गृही ॥ २३ ॥ मातापित्रोर्हिते युक्तो गोब्राह्मणहिते रतः ॥ दान्तो यज्वा देवभक्तो ब्रह्मलोके महीयते ॥ २४ ॥ त्रिवर्गसेवी सततन्देवतानाञ्च पूजनम् ॥ कुर्य्यादहरहर्नित्यं नमस्येत्प्रयतः सुरान् ॥ २५ ॥ विभाग[2]शीलः सततं क्षमायुक्तो दयालुकः ॥ गृहस्थस्तु समाख्यातो न गृहेण गृही भवेत् ॥ २६ ॥ क्षमा दया च विज्ञानं सत्यञ्चैव दमः शमः ॥ अध्यात्मनि[3]रतज्ञानमेतद्ब्राह्मणलक्षणम् ॥ २७ ॥ एतस्मान्न प्रमाद्येत विशेषेण द्विजोत्तमः ॥ यथाशक्ति चरेत्कर्म्म निन्दितानि विवर्ज्जयेत् ॥ २८ ॥ विधूय मोहकलिलं लब्ध्वा योगमनुत्तमम् ॥ गृहस्थो मुच्यते बन्धान्नात्र कार्य्या विचारणा ॥ २९ ॥ विगर्हातिक्रमाक्षेपहिंसाबन्धवधात्मनाम् ॥ अन्यमन्युसमुत्थानां दोषाणां मर्षणं क्षमा ॥ ३० ॥ स्वदुःखेष्विव कारुण्यं परदुःखेषु सौहृदात् ॥ दयेति मुनयः प्राहुः साक्षाद्धर्म्मस्य साधनम् ॥ ३१ ॥ चतुर्दशानां विद्यानां धारणं हि यथार्थतः ॥ विज्ञानमिति तद्विद्याद्येन धर्म्मो विवर्द्धते ॥ ३२ ॥ अधीत्य विधिवद्वेदानर्थञ्चैवोपलभ्य तु ॥ धर्म्मकार्य्यान्निवृत्तश्चेन्न तद्विज्ञानमिष्यते ॥ ३३ ॥ सत्येन लोकाञ्जयति सत्यं तत्परमं पदम् ॥ यथाभूतप्रवादन्तु सत्यमाहुर्म्मनीषिणः ॥ ३४ ॥ दमः शरीरोपरमः शमः प्रज्ञाप्रसादजः ॥ अध्यात्ममक्षरं विद्याद्यत्र गत्वा न शोचति ॥ ३५ ॥ यया स देवो भगवान्विद्यया वेद्यते परः ॥ साक्षाद्देवो महादेवस्तज्ज्ञानमिति कीर्तितम् ॥ ३६ ॥ तन्निष्ठस्तत्परो विद्वान्नित्यमक्रोधनः शुचिः ॥ महायज्ञपरो विद्वान्न भवेत्तदनुत्तमम् ॥ ३७ ॥ धर्म्मस्यायतनं यत्नाच्छरीरं प्रतिपालयेत् ॥ न च देहं विना रुद्रो विद्यते पुरुषैः परः ॥ ३८ ॥ नित्यधर्मार्थकामेषु युज्येत नियतो द्विजः ॥ न धर्म्मवर्ज्जितं काममर्थं वा मनसा स्मरेत् ॥ ३९ ॥ सीदन्नपि हि धर्म्मेण न त्वधर्म्मं समाचरेत् ॥ धर्म्मो हि भगवान्देवो गतिः सर्व्वेषु जन्तुषु ॥ ४० ॥ भूतानां प्रियकारी स्यान्न परद्रोहकर्म्मधीः ॥ न वेददेवतानिन्दां कुर्य्यात्तैश्च न संवदेत् ॥ ४१ ॥ यस्त्विमं नियतं विप्रो धर्म्माध्यायं पठेच्छुचिः ॥ अध्यापयेच्छ्रावयेद्वा ब्रह्मलोके महीयते ॥ ४२ ॥ इति श्री कूर्म्मपुराणे उत्तरार्द्धे व्यासगीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे ऋषिव्याससंवादे ब्रह्मचारिणां गार्हस्थ्यधर्मनिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ व्यास उवाच ॥ न हिंस्यात्सर्व्वभूतानि नानृतं वा वदेत्क

---

१ शुद्धकृन्मुच्यते गृही इति, श्राद्धं कुर्व्वन् मुमुच्यते इति पा०। २ विभागशीलः—रात्रिन्दिवं विभज्य धर्म्मार्थकामसेवीत्यर्थः। ३ शीलितेति पा०। ४ लभ्यते तनुमुत्तमामिति, लभेत तत्त्वमुत्तममिति पा०।

चित् ॥ नाहितं नाप्रियं ब्रूयान्न स्तेनः स्यात्कथञ्चन ॥ १ ॥ तृणं वा यदि वा शाकं मृदं वा जलमेव च ॥ परस्यापहरञ्जन्तुर्नरकं प्रतिपद्यते ॥ २ ॥ न राज्ञः प्रतिगृह्णीयान्न शूद्रात्पतितादपि ॥ नान्यस्माद्याचकत्वञ्च निन्दिताद्वर्ज्जयेद्बुधः ॥ ३ ॥ नित्यं याचनको न स्यात्पुनस्तत्रैव याचयेत् ॥ प्राणानपहरत्येष याचकस्तस्य दुर्म्मतिः ॥ ४ ॥ न देवद्रव्यहारी स्याद्विशेषेण द्विजोत्तमः ॥ ब्रह्मस्वं वा नापहरेदापद्यपि कदाचन ॥ ५ ॥ न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते ॥ देवस्वं चापि यत्नेन सदा परिहरेत्ततः ॥ ६ ॥ पुष्पे शाकोदके काष्ठे तथा मूले तृणे फले ॥ अदत्तादानमस्तेयं मनुः प्राह प्रजापतिः ॥ ७ ॥ गृहीतव्यानि पुष्पाणि देवार्चनविधौ द्विजाः ॥ नैकस्मादेव नियतमननुज्ञाय केवलम् ॥ ८ ॥ तृणं काष्ठं फलं पुष्पं प्रकाशं वै हरेद्बुधः ॥ धर्म्मार्थं केवलं ग्राह्यं ह्यन्यथा पतितो भवेत् ॥ ९ ॥ तिलमुद्गयवादीनां मुष्टिर्ग्राह्या पथि स्थितैः ॥ क्षुधार्त्तैर्नान्यथा विप्रा धर्म्मविद्भिरिति स्थितिः ॥ १० ॥ न धर्म्मस्यापदेशेन पापं कृत्वा व्रतं चरेत् ॥ व्रतेन पापं प्रच्छाद्य कुर्व्वन् स्त्रीशूद्रलम्बनम् ॥ ११ ॥ प्रेत्येह चेदृशो विप्रो गर्ह्यते ब्रह्मवादिभिः ॥ छद्मना चरितं यच्च व्रतं रक्षांसि गच्छति ॥ १२ ॥ अलिङ्गी लिंगिवेशेन यो वृत्तिमुपजीवति ॥ स लिंगिनां हरेदेनस्तिर्य्यग्योनौ च जायते ॥ १३ ॥ बैड़ालव्रतिनः पापा लोके धर्म्मविनाशकाः ॥ सद्यः पतन्ति पापेष कर्म्मणस्तस्य तत्फलम् ॥१४॥ पाखण्डिनो विकर्म्मस्थान्वामाचारांस्तथैव च ॥ पञ्चरात्रान् पाशुपतान् वाङ्मात्रेणापि नार्चयेत् ॥ १५ ॥ वेदनिन्दारतान् मर्त्यान्देवनिन्दारतांस्तथा ॥ द्विजनिन्दारतांश्चैव मनसापि न चिन्तयेत् ॥ १६ ॥ याजनं योनिसम्बन्धं सहवा सम्भाषणम् ॥ कुर्व्वाणः पतते जन्तुस्तस्माद्यत्नेन वर्जयेत् ॥१७॥ देवद्रोहाद्गुरुद्रोहः कोटिकोटिगुणाधिकः ॥ ज्ञानापवादो नास्तिक्यं तस्मा त्कोटिगुणाधिकम्॥१८॥गोभिश्च दैवतैर्विप्रैः कृष्या राजोपसेवया ॥ कुलान्यकुलतां यान्ति यानि हीनानि धर्मतः॥१९॥ कुविवाहैः क्रियालोपैर्वेदानध्ययनेन च ॥ कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च॥२०॥अनृतात्पारदार्याच्च तथाऽभक्ष्यस्य भक्षणात् ॥ अश्रौतधर्माचरणात्क्षिप्रं नश्यति वै कुलम्॥२१॥ अश्रोत्रियेषु वै दानाद्वृषलेषु तथैव च ॥ विहिताचारहीनेषु क्षिप्रं नश्यति वै कुलम्॥२२॥ नाधार्म्मिकैर्वृते ग्रामे न व्याधिबहुले भृशम् ॥ न शूद्रराज्ये निवसेन्न पाखण्डजनैर्वृते ॥२३॥ हिमवद्विन्ध्ययोर्मध्ये पूर्व्वपश्चिमयोः शुभम् ॥ मुक्त्वा समुद्रयोर्देशं नान्यत्र निवसेद्द्विजः ॥२४॥ कृष्णो वा यत्र चरति



१ न चान्यस्मादशक्तश्चेति पा॰ । २ पुनस्तं नैवेति पा॰ । ३ श्रुतिरिति; स्थितमिति पा॰ । ४ चण्डालव्रतिन इति पा॰ । ५ पञ्चरात्रान् पञ्चरात्रनामकग्रन्थानुसारिणो वैष्णवविशेषान् पा॰ । ६ पाशुपतान्—शैवविशेषान् ।

मृगो नित्यं स्वभावतः ॥ पुण्याश्च विश्रुता नद्यस्तत्र वा निवसेद्द्विजः ॥ २५ ॥ अर्द्धक्रोशान्नदीकूलं वर्जयित्वा द्विजोत्तमः ॥ नान्यत्र निवसेत्पुण्यां नान्त्यजग्रामसन्निधौ ॥ २६ ॥ न संवसेच्च पतितैर्न चण्डालैर्न पुक्कसैः ॥ न मूर्खैर्नावलिप्तैश्च नान्त्यैर्नान्त्यावसायिभिः ॥ २७ ॥ एकशय्यासनम्पङ्क्तिर्भाण्डपक्कान्नमिश्रणम् ॥ याजनाध्यापनं योनिस्तथैव सहभोजनम् ॥ २८ ॥ सहाध्यायस्तु दशमः सहयाजनमेव च ॥ एकादशैते निर्दिष्टा[1] दोषाः साङ्कर्यसंज्ञिताः ॥ २९ ॥ समीपे वाप्यवस्थानात्पापं संक्रमते नृणाम् ॥ तस्मात्सर्व्वप्रयत्नेन संकरं वर्ज्जयेद्बुधः ॥३०॥ एकपंक्त्युपविष्टा ये न स्पृशन्ति परस्परम् ॥ भस्मना कृतमर्यादा न तेषां संकरो भवेत् ॥ ३१ ॥ अग्निना भस्मना चैव सलिलेन विशेषतः ॥ द्वारेण स्तम्भमार्गेण षड्भिः पंक्तिर्विभिद्यते॥३२॥ न कुर्य्याद्दुःखवैराणि[2] विवादं चैव पैशुनम् ॥ परक्षेत्रे गां चरन्तीं न चाचक्षीत कस्यचित्॥३३॥न संवसेत्सूतकिना न कञ्चिन्मर्म्मणि स्पृशेत् ॥ न सूर्य्यपरिवेशं वा नेन्द्रचापं शवाग्निकम् ॥ ३४ ॥ परस्मै कथयेद्विद्वाञ्छशिनं वा कदाचन[3] ॥ न कुर्य्याद्बहुभिः सार्द्धं[4] विरोधं वा कदाचन॥३५॥आत्मनः प्रतिकूलानि परेषां न समाचरेत्॥तिथिं पक्षस्य न ब्रूयान्नक्षत्राणि विनिर्दिशेत्॥३६॥ नोदक्यामभिभाषेत नाशुचिं वा द्विजोत्तमः ॥ न देवगुरुविप्राणां दीयमानन्तु वारयेत् ॥३७॥ न चात्मानं प्रशंसेद्वा परनिन्दाञ्च वर्ज्जयेत् ॥ वेदनिन्दान्देवनिन्दां प्रयत्नेन विवर्ज्जयेत् ॥३८॥यस्तु देवानृषीन् विप्रान् वेदान्वा निन्दति द्विजः॥ न तस्य निष्कृतिर्दृष्टा शास्त्रेष्विह मुनीश्वराः॥३९॥निन्दयेद्वै गुरून्देवान्वेदं वा सोपबृंहणम्[5] ॥ कल्पकोटिशतं साग्रं रौरवे पच्यते नरः॥४०॥ तूष्णीमासीत निन्दायां न ब्रूयात्किञ्चिदुत्तरम् ॥ कर्णौ पिधाय गन्तव्यं न चैतानवलोकयेत् ॥४१॥ वर्ज्जयेद्वै रहस्यञ्च परेषां गूहयेद्बुधः ॥ विवादं स्वजनैः सार्द्धं न कुर्य्याद्वै कदाचन॥४२॥न पापं पापिनं ब्रूयादपापं वा द्विजोत्तमाः ॥ स तेन तुल्यदोषः स्यान्मिथ्याद्विदोषवान् भवेत्॥४३॥यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् ॥ तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् ॥ ४४ ॥ ब्रह्महत्यासुरापाने स्तेयगुर्वङ्गनागमे ॥ दृष्टं विशोधनं सद्भिर्नास्ति[6] मिथ्याभिशंसने ॥ ४५ ॥ नेक्षेतोद्यन्तमादित्यं शशिनञ्चानिमित्ततः ॥ नास्तंयातं न वारिस्थं नोपसृष्टं न मध्यगम्[7] ॥ ४६ ॥ तिरोहितं वाससा वा नादर्शान्तरगामिनम्[8] ॥ न नग्नां स्त्रियमीक्षेत पुरुषं वा कदाचन ॥ ४७ ॥ न च मूत्रं पुरीषं वा न च संसृष्टमैथुनम् ॥ नाशुचिः सूर्य्यसोमादीन् ग्रहानालोकयेद्बुधः ॥४८॥पतितव्यङ्गचण्डालानुच्छिष्टान्नावलोकयेत् ॥ नाभिभाषेत

---

१ एकादश समुद्दिष्टा इति पा० । २ शुष्कवैराणीति पा० । ३ कथञ्चनेति पा० । ४ बन्धुभिस्तथेति पा० । बन्धुभिः सह इति पा० । ५ सोपबृंहणं—उपबृंहणान्वितम् । उपबृंहणं संग्रहेण वर्द्धनम्, संहिताकारेण निबद्धम् । ६ दृष्टं वै शोधनं वृद्धैरिति, वृद्धैरिति पा० । ७ वा संसारादिति पा० । ८ नादर्शाद्यनुगामिनमिति, न दृशाद्यनुगामिनमिति पा० ।

च परमुच्छिष्टो वावगर्व्वितः[1]॥४९॥ न स्पृशेत्प्रेतसंस्पर्शं न क्रुद्धस्य गुरोर्मुखम् ॥ न तैलोदकयोश्छायां न पत्नीं भोजने सति ॥ नियुक्त[2]वन्धनाङ्गां वा नोन्मत्तं मत्तमेव वा॥५०॥नाश्नीयाद्भार्य्यया सार्द्धं नैनामीक्षेत मेहनीम्[3] ॥ क्षुवन्तीं जृम्भमाणां वा नासनस्थां यथासुखम्॥५१॥ नोदके चात्मनो रूपं न कूलं श्वभ्र[4]मेव वा ॥ न लङ्घयेच्च मूत्रं वा नाधितिष्ठेत्कदाचन॥५२॥न शूद्राय मति[5]न्दद्यात्कृशरं पायसन्दधि॥ नोच्छिष्टं वा घृतमधु न च कृष्णाजिनं हविः॥५३॥ न चैवास्मै व्रतन्दद्यान्न च धर्म्मं वदेद्बुधः ॥ न च क्रोधवशङ्गच्छेद्द्वेषं[6] रागञ्च वर्ज्जयेत्॥५४॥लोभं दम्भं तथा वर्ज्यं यात्रांविज्ञानकुत्सनम् ॥ मानं मोहं तथा क्रोधं द्वेषञ्च परिवर्ज्जयेत् ॥ ५५ ॥ न कुर्य्यात्कस्यचित्पीडां सुतं शिष्यञ्च ताडयेत् ॥ न हीनानुपसेवेत न च तीक्ष्णमतीन् क्वचित् ॥ ॥ ५६ ॥ नात्मानञ्चावमन्येत दैन्यं यत्नेन वर्ज्जयेत् ॥ न चाशिष्यं[7] न सत्कुर्य्यान्नात्मानं शंसयेद्बुधः ॥ ५७ ॥ न नखैर्विलिखेद्भूमिं गां च संवेशयेन्न हि ॥ न नदीषु[8] नदीं ब्रूयात्पर्व्वते न च पर्व्वतान् ॥५८॥ आवसे[9]त्तेन नैवापि न त्यजेत्सहयायिनम् ॥ नावगाहेदपो नग्नो वह्निञ्चापि व्रजेत्पदा ॥ ५९ ॥ शिरोऽभ्यङ्गावशिष्टेन तैलेनाङ्गं न लेपयेत् ॥ न शस्त्रसर्पैः क्रीडेत न स्वानि खानि च स्पृशेत्॥६०॥रोमाणि च रहस्यानि नाशिष्टेन सह व्रजेत् ॥ न पाणिपादावग्नौ च चापलानि समाश्रयेत् ॥ ६१ ॥ न शिश्नोदर[10]योर्नित्यं न च श्रवणयोः क्वचित् ॥ न चाङ्गनखवादं वै कुर्य्यान्नाञ्जलिना पिबेत् ॥ ६२ ॥ नाभिहन्याज्जलं पद्भ्यां पाणिना वा कदाचन ॥ न शातयेदिष्टकाभिः फलानि सफलानि च ॥ ६३ ॥ न म्लेच्छभाषणं शिक्षेन्नाकर्षेच्च पदासनम् ॥ न भेदनमधिस्फोटं छेदनं वा विलेखनम् ॥ ६४ ॥ कुर्य्याद्विमर्दनं धीमान्नाकस्मादेव निष्फलम् ॥ नोत्सङ्गे भक्षयेद्भक्ष्यान् वृथाचेष्टाञ्च नाचरेत् ॥६५॥ न नृत्येदथवा गायेन्न वादित्राणि वादयेत् ॥ न संहताभ्यां पाणिभ्यां कण्डूयेदात्मनः शिरः ॥६६॥न लौकिकैस्तवैर्देवांस्तोषयेद्बाह्य[11]जैरपि ॥ नाक्षैः क्रीडेन्न धावेत नाप्सु विण्मूत्रमाचरेत् ॥ ६७ ॥ नोच्छिष्टः संविशेन्नित्यं न नग्नः स्नानमाचरेत् ॥ न गच्छन्न पठेद्वापि न चैव स्वशिरः स्पृशेत् ॥ ६८ ॥ न दन्तैर्नखरोमाणि छिन्द्यात्सुप्तं न बोधयेत् ॥ न बालातपमासेवेत्[12] प्रेतधूमं विवर्ज्जयेत् ॥ ६९ ॥ नैकः सुप्याच्छून्यगृहे स्वयं नोपानहौ हरेत् ॥ नाकारणाद्वा निष्ठीवेन्न वाहुभ्यां नदीं तरेत् ॥ ७० ॥ न पादक्षालनं कुर्य्यात्पादेनैव कदाचन ॥

१ वावगुण्ठितः इति पा॰ । २ नामुक्तेति, न मुक्तेति पा॰ । ३ चाशुचिमिति पा॰ । ४ शुभं वाशुभमेव वेति पा॰। ५ मतिमानिति पा॰। ६ इर्ष्यामिति पा॰ । ७ न विशिष्टानिति, न च शिष्टानिति, न चाशिष्टानिति पा॰ । ८ नदीस्थितः नदीविषयिकां कथां तथा पर्व्वतारूढः पर्व्वतसम्बन्धिनीं कथां नापि प्रस्तुयात् । ९ तेन तादृशेन नद्यां नदीं पर्व्वते पर्व्वतं निर्द्दिशता जनेन सह नैवोत्तरेत् । आवासे भोजने वापीति पा॰ । १० न शिश्नोदरचापल्यमिति पा॰ । ११ वाक्यजैरपीति, वाह्यजैरपीति पा॰ । १२ आसेवेतेति साधु ।

नाग्नौ प्रतापयेत्पादौ न कांस्ये धावयेद्बुधः ॥ ७१ ॥ नातिप्रसारयेद्देवं ब्राह्मणान् गामथापि वा ॥ वाय्वग्निगुरुविप्रान्वा सूर्य्यं वा शशिनं प्रति ॥७२॥ अशुद्धशयनं यानं स्वाध्यायं स्नानभोजनम् ॥ बहिर्निष्क्रमणञ्चैव न कुर्वीत कथञ्चन ॥ ७३ ॥ स्वप्नमध्ययनं यानमुच्चारं भोजनं गतिम् ॥ उभयोः सन्ध्ययोर्नित्यं मध्याह्ने तु विवर्जयेत् ॥ ७४ ॥ न स्पृशेत्पाणिनोच्छिष्टो विप्रो गोब्राह्मणाऽनलान् ॥ न चैवान्नं पदा वापि न देवप्रतिमां स्पृशेत् ॥ ७५ ॥ नाशुद्धोऽग्निं परिचरेन्न देवान् कीर्त्तयेदृषीन् ॥ नावगाहेदगाधाम्बु धारयेन्नाग्निमेकतः ॥ ७६ ॥ न वामहस्तेनोद्धृत्य पिबेद्वक्त्रेण वा जलम् ॥ नोत्तरेदनुपस्पृश्य नाप्सु रेतः समुत्सृजेत् ॥ ७७ ॥ अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥ व्यतिक्रमेन्न स्रवन्तीन्नाप्सु मैथुनमाचरेत् ॥ ७८ ॥ चैत्यं वृक्षं न वै छिन्द्यान्नाप्सु ष्ठीवनमुत्सृजेत् ॥ नास्थिभस्मकपालानि न केशान्न च कण्टकान् ॥ ओषांगारकरीषं वा नाधितिष्ठेत्कदाचन ॥ ७९ ॥ न चाग्निं लंघयेद्धीमान्नोपदध्यादधः क्वचित् ॥ न चैनं पादतः कुर्य्यान्मुखेन न धमेद्बुधः ॥ ८० ॥ न कूपमवरोहेत नाचक्षीताशुचिः क्वचित् ॥ अग्नौ न प्रक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा ॥ ८१ ॥ सुहृन्मरणमार्त्तिं वा न स्वयं श्रावयेत्परान् ॥ अपण्यमथ पण्यं वा विक्रये न प्रयोजयेत् ॥ ८२ ॥ न वह्निं मुखनिश्वासैर्ज्वालयेन्नाशुचिर्बुधः ॥ पुण्यस्नानोदकस्नाने सीमान्तं वा कृपेन्न तु ॥ ८३ ॥ न भिन्द्यात्पूर्व्वसमयं सत्योपेतं कदाचन ॥ परस्परं पशून् व्यालान् पक्षिणो नावबोधयेत् ॥ ८४ ॥ परबाधां न कुर्वीत जलपानायनादिभिः ॥ कारयित्वा सुकर्म्माणि कारून् पश्चान्न वर्जयेत् ॥ सायं प्रातर्गृहद्वारान् भिक्षार्थं नावघाटयेत् ॥ ८५ ॥ बहिर्माल्यं बहिर्गन्धं भार्य्यया सह भोजनम् ॥ विगृह्य वादं कुद्वारप्रवेशञ्च विवर्ज्जयेत् ॥ ८६ ॥ न खादन् ब्राह्मणस्तिष्ठेन्न जल्पन्न हसन् बुधः ॥ स्वमग्निं नैव हस्तेन स्पृशेन्नाप्सु चिरं वसेत् ॥ ८७ ॥ न पक्षकेणोपधमेन्न शूर्पेण न पाणिना ॥ मुखेनैव धमेदग्निं मुखादग्निरजायत ॥ ८८ ॥ परस्त्रियं न भाषेत नायाज्यं याजयेद् द्विजः ॥ नैकश्चरेत्सभां विप्र समवायञ्च वर्ज्जयेत् ॥ देवतायतनं गच्छेत्कदाचिन्नाप्रदक्षिणम् ॥ ८९ ॥ न वीजयेद्वा वस्त्रेण न देवायतने स्वपेत् ॥ नैकोऽध्वानं प्रपद्येत नाधार्म्मिकजनैः सह ॥ ९० ॥ न व्याधिदूषितैर्वापि न शूद्रैः पतितैर्न वा ॥ नोपानद्वर्जितोऽध्वानं जलादिरहितस्तथा ॥ ९१ ॥ न

---

१ स्नानमिति पा० । २ चात्मानमिति पा० । ३ धारयेद्वानिमित्ततः इति पा० । ४ चैत्यवृक्षमिति, चैत्यवृक्षानिति पा० । ५ माचरेदिति पा० । ६ कूटपण्यमिति, कृतपण्यं चेति पा० । ७ चाग्रसेन्न तु इति पा० । न कृपेत्—नातिक्रम्य गच्छेदित्यर्थः । ८ पूर्व्वसमयं पूर्व्वनियमबन्धमित्यर्थः । ९ अभ्युपेतमिति पा० । १० जलवातातपादिभिरिति पा० । ११ न जपेद्वा इति पा० । १२ हस्ते नैकेनेति पा० । १३ न देवायतनं गच्छेत्कदाचिद्वामदक्षिणमिति पा० ।

रात्रावरिणा सार्द्धं न विना च कमण्डलुम् ॥ नाग्निगोब्राह्मणादीनामन्तरेण व्रजेत्क्वचित् ॥ ९२ ॥ निवत्स्यन्तीं न वनितामतिक्रामेद्द्विजोत्तमाः ॥ न निन्देद्योगिनः सिद्धान् गुणिनो वा यतींस्तथा ॥ ९३ ॥ देवतायतने प्राज्ञो न देवानाञ्च संन्निधौ ॥ नाक्रामेत्कामतश्छायां ब्राह्मणानाङ्गवामपि ॥९४॥ स्वान्तु नाक्रमयेच्छायां पतिताद्यैर्न रोगिभिः ॥ नाङ्गारभस्मकेशादिष्वधितिष्ठेत्कदाचन ॥९५॥ वर्जयेन्मार्जनीरेणुं स्नानवस्त्रघटोदकम् ॥ न भक्षयेदभक्ष्याणि नापेयञ्चापिबेद्द्विजाः ॥ ९६ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे गार्हस्थ्यधर्मनिरूपणं नाम षोडशोऽध्यायः॥१६॥

भक्ष्याभक्ष्यनिर्णयः ॥ व्यास उवाच ॥ नाद्याच्छूद्रस्य विप्रोऽन्नं मोहाद्वा यदि वान्यतः ॥ स शूद्रयोनिं व्रजति यस्तु भुंक्ते ह्यनापदि ॥ १ ॥ षण्मासान्यो द्विजो भुंक्ते शूद्रस्यान्नं विगर्हितम् ॥ जीवन्नेव भवेच्छूद्रो मृत एवाभिजायते ॥ २ ॥ ब्राह्मणक्षत्रियविशां शूद्रस्य च मुनीश्वराः ॥ यस्यान्नेनोदरस्थेन मृतस्तद्योनिमाप्नुयात् ॥३॥ नटान्नं नर्त्तकान्नञ्च तक्ष्णोऽन्नं कर्म्मकारिणः ॥ गणान्नङ्गणिकान्नञ्च षडन्नानि च वर्जयेत् ॥४॥ चक्रोपजीविरजकतस्करध्वजिनान्तथा ॥ गन्धर्व्वलोहकारान्नं सूतकान्नञ्च वर्जयेत् ॥ ५ ॥ कुलालचित्रकर्म्मान्नं वार्द्धुषेः पतितस्य च ॥ सुवर्णकारशैलूषव्याधबद्धातुरस्य च ॥ ६ ॥ चिकित्सकस्य चैवान्नं पुंश्चल्या दण्डकस्य च ॥ स्तेननास्तिकयोरन्नन्देवतानिन्दकस्य च ॥ ७ ॥ सोमविक्रयिणश्चान्नं श्वपाकस्य विशेषतः ॥ भार्य्याजितस्य चैवान्नं यस्य चोपपतिर्गृहे ॥ ८ ॥ उच्छिष्टस्य कदर्य्यस्य तथैवोच्छिष्टभोजिनः ॥ अपंक्त्यन्नञ्च संघान्नं शस्त्रजीवस्य चैव हि ॥ ९ ॥ क्लीवसन्यासिनश्चान्नं मत्तोन्मत्तस्य चैव हि ॥ भीतस्य रुदितस्यान्नमवक्रुष्टं परिक्षुतम् ॥ १० ॥ ब्रह्मद्विषः पापरुचेः श्राद्धान्नं सूतकस्य च ॥ वृथापाकस्य चैवान्नं शठान्नं चतुरस्य च ॥ ११ ॥ अप्रजानान्तु नारीणां भृतकस्य तथैव च ॥ कारुकान्नं विशेषेण शस्त्रविक्रयिणस्तथा ॥ १२ ॥ शौण्डान्नं घातिकान्नञ्च भिषजामन्नमेव च ॥ विद्धप्रजननस्यान्नं परिवेत्रन्नमेव च ॥ १३ ॥ पुनर्भुवो विशेषेण तथैव दिधिषूपतेः ॥ अवज्ञातं चावधूतं सरोषं विस्मयान्वितम् ॥ १४ ॥ गुरोरपि न भोक्तव्यमन्नं संस्कारवर्ज्जितम् ॥ दुष्कृतं हि मनुष्यस्य सर्व्वमन्ने

१ व्रतिनोवेति पा० । २ देवतायतनं प्राज्ञो देवानाञ्चैव मन्त्रिणामिति पा० । ३ ब्राह्मणानाञ्च गोरपीति पा० । ४ राजान्नमिति पा० । ५ चर्म्मकारिण इति पा० । ६ पौनर्भवशस्त्रकर्त्रोरभिशस्तस्य चैव हि इति पा० । ७ व्याधितस्यातुरस्य च इति पा० । ८ दाम्भिकस्येति पा० । ९ परिक्षतमिति, अवक्रुद्धं परिक्षुतमिति पा० । १० श्वशुरस्येति, शवान्नं भासुरस्य च इति पा० । ११ कृतघ्नस्येति पा० । १२ शौण्डिकान्नं घाटिकान्नमिति पा० ।

व्यवस्थितम् ॥ १५ ॥ यो यस्यान्नं समश्नाति स तस्याश्नाति किल्बिषम् ॥ आर्द्धिकः[1] कुलमित्रश्च स्वगोपालश्च नापितः[2] ॥ १६ ॥ कुशीलवः कुम्भकारः क्षेत्रकर्म्मक एव च ॥ एते शूद्रेषु भोज्यान्नं दत्त्वा स्वल्पं पणं बुधैः ॥ पायसं स्नेहपक्कं यत् गोरसश्चैव सक्तवः ॥ १७ ॥ पिण्याकश्चैव तैलश्च शूद्राद्ग्राह्यं तथैवं[3] च ॥ वृन्ताकञ्जालिंका[4] शाकं कुसुम्भाश्मन्तकं तथा ॥ १८ ॥ पलाण्डुं लसुनं सूक्तं निर्य्यासश्चैव वर्जयेत् ॥ छत्राकं विड्वराहश्च शेलं पीयूषमेवं[5] च ॥ १९ ॥ विलयं सुसुखश्चैव[9] कवकानि[6] च वर्जयेत् ॥ गृञ्जनं किंशुकश्चैव[7] कुक्कुटं चँ तथैव च ॥ २० ॥ उम्दुवरमलाबुं च जग्ध्वा पतति वै द्विजः ॥ वृथाकृशरसंयावं पायसापूपमेव च ॥ २१ ॥ अनुपाकृतमांसं च देवान्नानि हवींषि[8] च ॥ यवागूं मातुलिङ्गञ्च मत्स्यानप्यनुपाकृतान् ॥ २२ ॥ नीपं कपित्थं प्लक्षं च प्रयत्नेन विवर्जयेत् ॥ पिण्याकं चोद्धृतस्नेहं दिवाधानास्तथैव च ॥ २३ ॥ रात्रौ च तिलसम्बद्धं प्रयत्नेन दधि त्यजेत् ॥ नाश्नीयात्पयसा तक्रं न वीजान्युपजीवयेत् ॥ २४ ॥ क्रियादुष्टं भावदुष्टमसत्संगं विवर्ज्जयेत् ॥ केशकीटावपन्नं च स्वभूलेखं च नित्यशः ॥ २५ ॥ श्वाघ्रातं च पुनः सिद्धं चण्डालावेक्षितं तथा ॥ उदक्यया च पतितैर्गवा चाघ्रातमेव च ॥ २६ ॥ अनर्च्चितं पर्य्युषितं पर्य्याभ्रान्तं च नित्यशः ॥ काककुक्कुटसंस्पृष्टं कृमिभिश्चैव संयुतम् ॥ २७ ॥ मनुष्यैरथवा घ्रातं कुष्ठिना स्पृष्टमेव च ॥ न रजस्वलया दत्तं न पुंश्चल्या सरोषकर्म्म्[10] ॥ २८ ॥ मलवद्वाससा चापि परया चोपयोजयेत्[11] ॥ विवत्सायाश्च गोः क्षीरमौष्ट्रं वा निर्दशस्यं[12] च ॥ २९ ॥ आविकं सन्धिनीक्षीरमपेयं[13] मनुरब्रवीत् ॥ वलाकं हंसदात्यूहं कलविंकं शुकं तथा ॥ ३० ॥ तथा कुररवल्लूरं[14] जालपादश्च कोकिलम् ॥ चापांश्च खञ्जरीटांश्च श्येनं गृध्रं तथैव च ॥ ३१ ॥ उलूकं चक्रवाकञ्च भासं पारावतं तथा ॥ कपोतं टिट्टिभञ्चैव ग्रामकुक्कुटमेव च ॥ ३२ ॥ सिंहं व्याघ्रञ्च मार्जारं श्वानं कुक्कुरमेव च ॥ शृगालं मर्कटञ्चैव गर्दभञ्च न भक्षयेत् ॥ न भक्षयेत्सर्व्वमृगान्नान्यांन्वनचरान्द्विजान्[15] ॥ ३३ ॥ जलेचरान् स्थलचरान् प्राणिनश्चेति धारणा ॥ गोधा कूर्म्मः शशः श्वावित्[16] सल्लकी चेति सत्तमाः ॥ ३४ ॥ भक्ष्याः पञ्चनखा नित्यं मनुराह प्रजापतिः ॥ मत्स्यान् सशल्कान् भुञ्जीयान्मांसं रौरवमेव च ॥ ३५ ॥ निवेद्य देवताभ्यस्तु ब्राह्मणेभ्यस्तु

---

१ आर्तिजः इति पा० । २ गोपालो दासनापितौ इति पा० । ३ शूद्राद्ग्राह्यं द्विजातिभिरिति पा० । ४ नालिकेति पा० । ५ पीलूपमेवेति, विड्वराहश्च शैलं पेयुषमेव च इति, विड्वराहश्च शैलूपपेयूषमेव च इति पा० । ६ करकाणीति । ७ ककुभश्चेति पा० । ८ देवधान्यमिति पा० । ९ सुहल्लखश्चेति पा० । १० सरोमयेति पा० । ११ परवासोऽथ वर्जयेदिति पा० । १२ चानिर्दशन्तथेति पा० । १३ सन्धिनीक्षीरमदेयमिति पा० । १४ कुररश्चचकोरश्चेति पा० । १५ पक्षिणो अन्यान्वनेचरानित पा० । १६ खड्गीती पा० ।

नान्यथा ॥ मयूरन्तित्तिरञ्चैव कपिञ्जलकमेव च ॥ ३६ ॥ वार्ध्रीणसन्द्वीपिनञ्च भक्ष्यानाह प्रजापतिः ॥ राजीवान् सिंहतुण्डांश्च तथा पाठीनरोहितौ ॥ ३७ ॥ मत्स्येष्वेते समुद्दिष्टा भक्षणीया मुनीश्वराः ॥ प्रोक्षितं भक्षयेदेषां मांसञ्च द्विजकाम्यया ॥ ३८ ॥ यथाविधि नियुक्तश्च प्राणानामपि चात्यये ॥ भक्षयेदेव मांसानि शेषभोजी न लिप्यते ॥ ३९ ॥ औषधार्थमशक्तौ वा नियोगाद्यं न कारयेत् ॥ आमन्त्रितस्तु यः श्राद्धे दैवे वा मांसमुत्सृजेत् ॥ यावन्ति पशुरोमाणि तावतो नरकान् व्रजेत् ॥ ४० ॥ अपेयं वाप्यपेयञ्च तथैवास्पृश्यमेव च ॥ द्विजातीनामनालोच्यं नित्यं मद्यमिति स्थितिः ॥ ४१ ॥ तस्मात्सर्व्वप्रयत्नेन मद्यं निन्द्यञ्च वर्ज्जयेत् ॥ पीत्वा पतितः कर्म्मभ्यो न सम्भाष्यो भवेद्द्विजैः ॥ ४२ ॥ भक्षयित्वा ह्यभक्ष्याणि पीत्वापेयान्यपि द्विजः ॥ नाधिकारी भवेत्तावद्यावत्तन्न व्रजत्यधः ॥ ४३ ॥ तस्मात्परिहरेन्नित्यमभक्ष्याणि प्रयत्नतः ॥ आरोप्य याति चैवैको तथा वै याति रौरवम् ॥ ४४ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे भक्ष्याभक्ष्यनिर्णये व्यासगीतासु सप्तदशोऽध्यायः ॥१७ ॥ ब्राह्मणानां नित्यकर्तव्यकर्माणि ॥ ऋषय ऊचुः ॥ अहन्यहनि कर्त्तव्यं ब्राह्मणानां महामुने ॥ तदाचक्ष्वाखिलं कर्म्म येन मुच्येत बन्धनात् ॥ १ ॥ व्यास उवाच ॥ वक्ष्ये समाहिता यूयं शृणुध्वं गदतो मम ॥ अहन्यहनि कर्त्तव्यं ब्राह्मणानां क्रमाद्विधिम् ॥ २ ॥ ब्राह्मे मुहूर्त्ते तूत्थाय धर्म्ममर्थञ्च चिन्तयेत् ॥ कायक्लेशञ्च यन्मूलं ध्यायेत मनसेश्वरम् ॥३॥ उषःकाले च सम्प्राप्ते कृत्वा चावश्यकं बुधः॥स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि ॥४॥ प्रातःस्नानेन पूयन्ते येऽपि पापकृतो जनाः॥ तस्मात्सर्व्वप्रयत्नेन प्रातःस्नानं समाचरेत् ॥ ५ ॥ प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ॥ ऋषीणामृषिता नित्यं प्रातःस्नानान्न संशयः ॥६॥ मुखे सुप्तस्य सततं लाला याः संस्रवन्ति हि ॥ ततो नैवाचरेत्कर्म्म अकृत्वा स्नानमादितः ॥ ७ ॥ अलक्ष्मको जलं किञ्चित् दुःस्वप्नं दुर्विचिन्तितम् ॥ प्रातःस्नानेन पापानि पूयन्ते नात्र संशयः ॥ ८ ॥ अतः स्नानं विना पुंसां प्रभातं कर्म्म संस्मृतम् ॥ होमे जप्ये विशेषेण तस्मात्स्नानं समाचरेत् ॥ ९ ॥ अशक्तावशिरस्कं वा स्नानमस्य विधीयते ॥ आर्द्रेण वाससा वाथ मार्ज्जनं कापिलं स्मृतम् ॥ १० ॥ आयत्ये वै समुत्पन्ने स्नानमेव समाचरेत् ॥ ब्राह्मादीनामथाशक्तौ स्नानान्याहुर्म्मनीषिणः ॥ ११ ॥ ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च ॥ वारुणं यौगिकं यच्च षोढा स्नानं समासतः ॥ १२ ॥ ब्राह्मन्तु मार्ज्जनं मन्त्रैः कुशैः सोदकविन्दुभिः ॥ आग्नेयं भस्मना पादमस्तकादेहधूलनम् ॥ १३ ॥ गवां हि रजसा

१ कपोतञ्च कपिञ्जलमिति पा०। २ शेखरं सिंहतुण्डश्चेति पा० । ३ अपेयानि च विमा वै तथा चेद्याति रौरवमिति पा० । ४ कायक्लेशं तदुद्भवमिति पा०। ५ अलक्ष्मीः कालकर्णी चेति पा० । ६ असामर्थ्ये इति पा० । ७ तद्वादिति पा० ।

प्रोक्तं वायव्यं स्नानमुत्तमम् ॥ यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ॥ १४ ॥ वारुणश्चावगाहस्तु मानसं स्वात्मवेदनम् ॥ योगिनां स्नानमाख्यातं योगे विश्वातिचिन्तनम् ॥ १५ ॥ आत्मतीर्थमिति ख्यातं सेवितं ब्रह्मवादिभिः ॥ मनः शुद्धिकरं पुंसां नित्यं तत्स्नानमाचरेत् ॥ १६ ॥ शक्तश्चेद्वारुणं विद्वान् प्रायश्चित्ते तथैव च ॥ प्रक्षाल्य दन्तकाष्ठं वै भक्षयित्वा विधानतः ॥ १७ ॥ आचम्य प्रयतो नित्यं स्नानं प्रातः समाचरेत् ॥ मध्याङ्गुलिसमस्थौल्यं द्वादशांगलसम्मितम् ॥ १८ ॥ सत्वचं दन्तकाष्ठं स्यात्तदग्रेण तु धावयेत् ॥ क्षीरवृक्षसमुद्भूतं मालतीसम्भवं शुभम् ॥ अपामार्गश्च बिल्वश्च करवीरं विशेषतः ॥ १९ ॥ वर्जयित्वा निन्दितानि गृहीत्वैकं यथोदितम् ॥ परिहृत्य दिनं पापं भक्षयेद्वै विधानवित् ॥ २० ॥ नोत्पादयेद्दन्तकाष्ठं नाङ्गुल्यग्रेण धारयेत् ॥ प्रक्षाल्य भंक्त्वा तज्जह्याच्छुचौ देशे समाहितः ॥ २१ ॥ स्नात्वा सन्तर्प्पयेद्देवानृषीन् पितृगणांस्तथा ॥ आचम्य मन्त्रविन्नित्यं पुनराचम्य वाग्यतः ॥ २२ ॥ सम्माज्ज्यं मन्त्रैरात्मानं कुशैः सोदकबिन्दुभिः ॥ आपोहिष्ठाव्याहृतिभिः सावित्र्या वारुणैः शुभैः ॥ २३ ॥ ओङ्कारव्याहृतियुतां गायत्रीं देवमातरम् ॥ जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः ॥ २४ ॥ प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः ॥ प्राणायामत्रयङ्कृत्वा ध्यायेत्सन्ध्यामिति स्मृतिः ॥ २५ ॥ या च सन्ध्या जगत्सूतिर्मायातीता हि निष्कला ॥ ऐश्वरी केवला शक्तिस्तत्त्वत्रयसमुद्भवा ॥ २६ ॥ ध्यात्वार्कमण्डलगतां सावित्रीं वै जपेद्बुधः ॥ प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ॥ २७ ॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्म्मसु ॥ यदन्यत्कुरुते किञ्चिन्न तस्य फलमाप्नुयात् ॥ २८ ॥ अनन्यचेतसः शान्ता ब्राह्मणा वेदपारगाः ॥ उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्व्वेऽपरां गतिम् ॥ २९ ॥ योऽन्यत्र कुरुते यत्नं धर्म्मकार्य्ये द्विजोत्तमः ॥ विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥ ३० ॥ तस्मात्सर्व्वप्रयत्नेन सन्ध्योपासनमाचरेत् ॥ उपासितो भवेत्तेन देवो योगतनुः परः ॥ ३१ ॥ सहस्रपरमां नित्यं शतमध्यां दशावराम् ॥ सावित्रीं वै जपेद्विद्वान् प्राङ्मुखः प्रयतः स्थितः ॥ ३२ ॥ अथोपतिष्ठेदादित्यमुद्यन्तं वै समाहितः ॥ मन्त्रैस्तु विविधैः सौरै ऋग्यजुःसामसम्भवैः ॥ ३३ ॥ उपस्थाय महायोगं देवदेवं दिवाकरम् ॥ कुर्वीत प्रणतिं भूमौ मूर्ध्ना तेनैव मन्त्रतः ॥ ३४ ॥ ओङ्खद्योताय च शान्ताय कारणत्रयहेतवे ॥ निवेदयामि चात्मानं नमस्ते विश्वरूपिणे ॥ ३५ ॥ नमस्ते घृणिने तुभ्यं सूर्य्याय ब्रह्मरूपिणे ॥ त्वमेव ब्रह्म परममापोज्यो

---

१ योगाद्विष्णुविचिन्तनमिति पा० । २ प्राजापत्यमिति पा० । ३ नांगुल्या धारयेद क्वचिदिति पा० । ४ प्राक्कूलेषुसमासीनः इति पा० । ५ श्रुतिरिति पा० । ६ ऐश्वरी तु परेति पा० । ७ नित्यश्चेति पा० । ८ ज्ञानरूपिणे इति पा० ।

 

तीरसोऽमृतम् ॥ भूर्भुवः स्वस्त्वमोङ्कारः शर्व्वो रुद्रः सनातनः ॥ ३६ ॥ पुरुषः सन्महोऽन्तस्थं प्रणमामि कपर्दिनम् ॥ त्वमेव विश्व म्बहुधा जातं यज्जायते च यत् ॥ नमो रुद्राय सूर्य्याय त्वामहं शरणं गतः ॥ ३७ ॥ प्रचेतसे नमस्तुभ्यं नमो मीढुष्टमाय च ॥ नमो नमस्ते रुद्राय त्वामहं शरणङ्गतः ॥ हिरण्यबाहवे तुभ्यं हिरण्यपतये नमः ॥ ३८ ॥ अम्बिकापतये तुभ्यमुमायाः पतये नमः ॥ नमोऽस्तु नीलग्रीवाय नमस्तुभ्यं पिनाकिने ॥ ३९ ॥ विलोहिताय भर्गाय सहस्राक्षाय ते नमः ॥ तमोऽपहाय ते नित्यमादित्याय नमोऽस्तु ते ॥ ४० ॥ नमस्ते वज्रहस्ताय त्र्यम्बकाय नमो नमः ॥ प्रपद्ये त्वां विरूपाक्षं महान्तं परमेश्वरम् ॥ ४१ ॥ हिरण्मये गृहे गुप्तमात्मानं सर्व्वदेहिनाम् ॥ नम स्यामि परं ज्योतिर्ब्रह्माणन्त्वां परामृतम् ॥ ४२ ॥ विश्वं पशुपतिं भीमं नरनारीशरीरिणम् ॥ नमः सूर्य्याय रुद्राय भास्वते परमेष्ठिने ॥ ४३ ॥ उग्राय सर्व्वतक्षाय त्वां प्रपद्ये सदैव हि ॥ एतद्वै सूर्य्यहृदयं जप्त्वा स्तवमनुत्तमम् ॥ ४४ ॥ प्रातःकालेऽथ मध्याह्ने नमस्कुर्य्याद्दिवाकरम् ॥ इदं पुत्राय शिष्याय धार्म्मिकाय द्विजातये ॥ ४५ ॥ प्रदेयं सूर्य्यहृदयं ब्रह्मणा तु प्रदर्शितम् ॥ सर्व्वपापप्रशमनं वेदसारसमुद्भवम् ॥ ब्राह्मणानां हितं पुण्यमृषिसंघैर्निषेवितम् ॥ ४६ ॥ अथागम्य गृहं विप्रः समाचम्य यथाविधि ॥ प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम् ॥ ४७ ॥ ऋत्विक् पुत्रोऽथ पत्नी वा शिष्यो वापि सहोदरः ॥ प्राप्यानुज्ञां विशेषेण ह्यध्वर्युर्वा यथाविधि ॥ ४८ ॥ पवित्रपाणिः पूतात्मा शुक्लाम्बरधरः शुचिः ॥ अनन्यमँनसा नित्यं जुहुयात्संयतेन्द्रियः ॥ ४९ ॥ विना दर्भेण यत्कर्म्म विना सूत्रेण वा पुनः ॥ राक्षसं तद्भवेत्सर्व्वन्नामुत्रेह फलप्रदम् ॥ ५० ॥ दैवतानि नमस्कुर्य्यादुपहारान्निवेदयेत् ॥ दद्यात्पुष्पादिकन्तेषां वृद्धांश्चैवाभिवादयेत् ॥ ५१ ॥ गुरुञ्चैवाप्युपासीत हितञ्चास्य समाचरेत् ॥ वेदा भ्यासन्ततः कुर्य्यात्प्रयत्नाच्छक्तितो द्विजः ॥ ५२ ॥ जपेदध्यापयेच्छिष्यान्धारयेद्वै विचारयेत् ॥ अवेक्ष्य तच्च शास्त्राणि धर्म्मादीनि द्विजोत्तमाः ॥ ५३ ॥ वैदिकांश्चैव निगमान्वेदाङ्गानि च सर्व्वशः ॥ उपेयादीश्वरं वाथ योगक्षेमप्रसिद्धये ॥ ५४ ॥ साधयेद्विविधानर्थान् कुटुम्बार्थे ततो द्विजः ॥ ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ॥ ५५ ॥ पुष्पाक्षतान् कुशतिलान् गोशकृच्छुद्धमेव वा ॥ नदीषु देवखातेषु तडागेषु सरः सु च ॥ स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥ ५६ ॥ परकीयनिपानेषु न स्नायाद्वै कदाचन ॥ पञ्चपिण्डान्समुद्धृत्य स्नायाद्वासम्भवे पुनः



१ सदसत्सूयते इति पा० । २ बहु इति पा० । ३ दहन्तमिति पा० । ४ परां गतिमिति पा० । ५ सर्व्वभक्षाय इति पा० । ६ ब्रह्मणस्तु प्रसादतः इति पा० । ७ अनन्यमनसो वह्निमिति पा० । ८ मन्त्रेण यदिति पा० । ९ देवताराान्निवेदयेदिति पा० । १० श्रावयेच्चेति पा० ।

॥ ५७ ॥ मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ॥ अधस्तु तिसृभिः कायः पादौ षड्भिस्तथैव च ॥ ५८ ॥ मृत्तिका च समुद्दिष्टा सार्द्रामल कमात्रिका ॥ गोमयस्य प्रमाणन्तु तेनाङ्गं लेपयेत्पुनः ॥ ५९ ॥ लेपयित्वा तीरसंस्थं तल्लिङ्गैरेव मन्त्रतः ॥ प्रक्षाल्याचम्य विधिवत्ततः स्नायात्समाहितः ॥ ६० ॥ अभिमन्त्र्य जलं मन्त्रैस्तल्लिङ्गैर्वारुणैः शुभैः ॥ भावपूतस्तदव्यक्तं धारयेद्विष्णुमव्ययम् ॥ ६१ ॥ आपो नारायणोद्भूतास्ता एवास्यायनं पुनः॥ तस्मान्नारायणन्देवं स्नानकाले स्मरेद्बुधः॥६२॥ प्रेक्ष्य सोङ्कारमादित्यं त्रिर्निमज्जेज्जलाश्रये ॥६३॥ आचान्तः पुनराचामेत् मन्त्रेणानेन मन्त्रवित् ॥ ६४ ॥ अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥ त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम् ॥ ६५ ॥ द्रुपदां वा त्रिरभ्यस्येद्व्याहृतिम्प्रणवान्विताम् ॥ सावित्रीं वा जपेद्विद्वान्तथा चैवाघमर्षणम् ॥ ६६ ॥ ततः सम्मार्ज्जनं कुर्यात् आपोहिष्ठा मयो भुवः ॥ इदमापः प्रवहतो व्याहृतिभिस्तथैव च ॥ ६७ ॥ तथाभिमन्त्र्य तत्तोयमापो हिष्ठादिभिस्त्रिकैः ॥ अन्तर्जलगतो मग्नो जपेत्त्रिरघमर्षणम् ॥ ६८ ॥ द्रुपदां वाथ सावित्रीं तद्विष्णोः परमम्पदम् ॥ आवर्त्तयेच्च प्रणवं देवं वा संस्मरेद्धरिम् ॥ ६९ ॥ द्रुपदादिव यो मन्त्रो यजुर्वेदे प्रतिष्ठितः ॥ अन्तर्जले त्रिरावर्त्य सर्व्वपापैः प्रमुच्यते ॥ ७० ॥ अपः पाणौ समादाय जप्त्वा वै मार्जने कृते ॥ विन्यस्य मूर्ध्नि तत्तोयं मुच्यते सर्व्वपातकैः ॥ ॥ ७१ ॥ यथाश्वमेधः क्रतुराट् सर्व्वपापापनोदनः ॥ तथाघमर्षणम्प्रोक्तं सर्व्वपापापनोदनम् ॥ ७२ ॥ अथोपतिष्ठेदादित्यमूर्द्ध्वं पुष्पाक्षतान्वितम् ॥ प्रक्षिप्यालोकयेद्देवमूर्द्ध्वं यस्तमसः परः ॥ ७३ ॥ उदुत्यं चित्रमित्येते तच्चक्षुरिति मन्त्रतः ॥ हंसः शुचिषदन्तेन सावित्र्या सविशेषतः ॥ ७४ ॥ अन्यैश्च वैदिकैर्मन्त्रैः सौरैः पापप्रणाशनैः ॥ सावित्रीं वै जपेत्पश्चाज्जपयज्ञः स वै स्मृतः ॥ ७५ ॥ विविधानि पवित्राणि गुह्यविद्यास्तथैव च ॥ शतरुद्रीयं शिरसं सौरान्मन्त्रांश्च सर्व्वतः॥ ७६ ॥ प्राक्कूलेषु समासीनः कुशेषु प्राङ्मुखः शुचिः ॥ तिष्ठंश्च वीक्षमाणोऽर्कं जप्यं कुर्य्यात्समाहितः ॥ ७७ ॥ स्फाटिकेन्द्राक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ॥ कर्त्तव्या त्वक्षमाला स्यादुत्तरादुत्तमा स्मृता ॥ ७८ ॥ जपकाले न भाषेत व्यंगा न प्रक्षयेद्बुधः ॥ न कम्पयेच्छिरो ग्रीवां दन्तान्नैव प्रकाशयेत्॥७९॥ गुह्यका राक्षसाःसिद्धा हरन्ति प्रसभं यतः॥ एकान्तेषु शुचौ देशे तस्माज्जप्यं समा

१ लेपयेत्ततः इति पा० । २ तल्लिङ्गैनैवेति पा० । ३ ध्यायन्वै विष्णुमिति; धारयन्निति पा० । ४ पुनः पुनस्तथाचामेदिति पा० । ५ हिष्ठादिमन्त्रकैरिति पा० । ६ त्रिपथामिति; त्रिपदामिति पा० । ७ अथाघमर्षणं सूक्तमिति पा० । ८ पुष्पाक्षताञ्जलिमिति,पुष्पान्वितं जलमिति पा० । ९ उद्वयं तमसस्परि इति पा० । १० शतरुद्रीयमाथर्वशिरः सौरांश्चेति पा० । ११ तिष्ठंश्चोद्वीक्षमाणोऽर्कमिति पा० । १२ उत्कृष्टाचोत्तरोत्तरा इति पा० ।

चरेत् ॥ ८० ॥ चण्डालाशौचपतितान् दृष्ट्वा चैव पुनर्जपेत् ॥ तैरेव भाषणं कृत्वा स्नात्वा चैव पुनर्ज्जपेत् ॥८१॥ आचम्य प्रयतो नित्यं जपेदशुचिदर्शने॥सौरान्मन्त्रान् शक्तितो वै पावमानीस्तु कामतः॥८२॥ यदि स्यात् क्लिन्नवासा वै वारिमध्यं गतोऽपि वा ॥ अन्यथा तु शुचौ भूम्यां दर्भेषु सुसमाहितः ॥ ८३ ॥ प्रदक्षिणं समावृत्य नमस्कृत्य ततः क्षितौ ॥ आचम्य च यथाशास्त्रं भक्त्या स्वाध्यायमाचरेत् ॥ ८४ ॥ ततः सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा ॥ आदावोंकारमुच्चार्य्य नामान्ते तर्पयामि वः ॥८५॥ देवान् ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ॥ तिलोदकैः पितॄन् भक्त्या स्वसूत्रोक्तविधानतः ॥ ८६ ॥ अन्वाब्धेन सव्येन पाणिना दक्षिणेन तु ॥ देवर्षींस्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄन् ॥ यज्ञोपवीती देवानां निवीती ऋषितर्पणे ॥ ८७ ॥ प्राचीनावीती पित्र्ये तु स्वेन तीर्थेन भावितः ॥ निष्पीड्य स्नानवस्त्रन्तु समाचम्य च वाग्यतः ॥ स्वैर्मन्त्रैरर्च्चयेद्देवान् पुष्पैः पत्रैरथाम्बुभिः ॥ ८८ ॥ ब्रह्माणं शङ्करं सूर्य्यं तथैव मधुसूदनम् ॥ अन्यांश्चाभिमतान्देवान् भक्त्याचारो नरोत्तमः ॥ ८९ ॥ प्रदद्याद्वाथ पुष्पाणि सूक्तेन पौरुषेण तु ॥ आपो वा देवताः सर्व्वास्तेन सम्यक् समर्च्चिताः ॥ ९० ॥ ध्यात्वा प्रणवपूर्व्वं वै देवतानि समाहितः ॥ नमस्कारेण पुष्पाणि विन्यसेद्वै पृथक् पृथक् ॥९१॥ विष्णोराराधनात्पुण्यं विद्यते कर्म्म वैदिकम् ॥ तस्मादनादिमध्यान्तं नित्यमाराधयेद्धरिम्॥९२॥तद्विष्णोरिति मन्त्रेण सूक्तेन सुसमाहितः ॥ न ताभ्यां सदृशो मन्त्रो वेदेषूक्तश्चतुर्ष्वपि ॥ तदात्मा तन्मनाः शान्तस्तद्विष्णोरिति मन्त्रतः ॥ ९३ ॥ अथवा देवमीशानं भगवन्तं सनातनम् ॥ आराधयेन्महादेवं भावपूतो महेश्वरम्॥९४॥मन्त्रेण रुद्रगायत्र्या प्रणवेनाथ वा पुनः ॥ ईशानेनाथवा रुद्रैस्त्र्यम्बकेन समाहितः ॥ ९५ ॥ पुष्पैः पत्रैरथाद्भिर्वा चन्दनाद्यैर्महेश्वरम् ॥ उक्त्वा नमः शिवायेति मन्त्रेणानेन वा जपेत् ॥ ९६ ॥ नमस्कुर्य्यान्महादेवं तं मृत्युञ्जयमीश्वरम् ॥ निवेदयीत स्वात्मानं यो ब्रह्मणमितीश्वरम् ॥ ९७ ॥ प्रदक्षिणं द्विजः कुर्य्यात्पञ्च वर्षाणि वै बुधः ॥ ध्यायीत देवमीशानं व्योममध्यगतं शिवम् ॥ ९८ ॥ अथावलोकयेदर्कं हंसः शुचिषदित्यृचा ॥ कुर्वन् पञ्च महायज्ञान् गृहङ्गत्वा समाहितः ॥९९॥ देवयज्ञं पितृयज्ञम्भूतयज्ञन्तथैव च ॥ मानुष्यं ब्रह्मयज्ञञ्च पञ्च यज्ञान् प्रचक्षते ॥ १०० ॥ यदि स्यात्तर्पणादर्वाक् ब्रह्मयज्ञः कृतो न हि ॥ कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत् ॥ ॥ १ ॥ अग्नेः पश्चिमतो देशे भूतयज्ञान्त एव च ॥ कुशपुञ्जे समासीनः कुशपाणिः समाहितः ॥२॥ शालाग्नौ लौकिके वाथ जले भूम्यामथापि वा ॥ वैश्वदेवश्च कर्त्तव्यो देवयज्ञः स वै स्मृतः ॥ ३ ॥ यदि स्याल्लौकिके पक्षे ततोऽन्नं तत्र हूयते ॥ शालाग्नौ तत्पचेदन्नं विधिरेष सनातनः ॥ १०४ ॥



१ पितृगणान् क्रमादिति पा० । २ स्वगृह्योक्त इति पा० । ३ अन्यांश्चापि महादेवान् भक्त्या चाक्रोधनो नर इति पा० । ४ सूक्तेन पौरुषेण–पुरुषसूक्तेन "सहस्रशीर्षा पुरुषः" इत्यादिमन्त्रेण । ५पुरुषेण तु इति पा० । ६ ऋतं सत्यमितीश्वरमिति पा० । ७ ध्यायीत–ध्यायेत्, आर्षः प्रयोगः । ८ ऋषियज्ञन्तथैव चेति पा० ।

देवेभ्यश्च हुतादन्नाच्छेषाद्भूतबलिं हरेत् ॥ भूतयज्ञः स विज्ञेयो भूतिदः सर्वदेहिनाम् ॥ ५ ॥ श्वभ्यश्च श्वपचेभ्यश्च पतितादिभ्य एव च ॥ दद्या
द्भूमौ बहिश्चान्नम्पक्षिभ्यो द्विजसत्तमाः ॥ ६ ॥ सायश्चान्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत् ॥ भूतयज्ञस्त्वयन्नित्यं सायम्प्रातर्यथाविधि ॥ ७ ॥
एकन्तु भोजयेद्विप्रं पितॄनुद्दिश्य सन्ततम् ॥ नित्यश्राद्धं तदुच्छिष्टं पितृयज्ञो गतिप्रदः ॥ ८ ॥ उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ॥
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् ॥ ९ ॥ पूजयेदतिथिं नित्यं नमस्येदर्चयेद्विभुम् ॥ मनोवाक्कर्म्मभिः शान्तः स्वागतं स्वगृहं गतः ॥ १० ॥
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥ हन्तकारमथाग्रं वा भिक्षां वा शक्तितो द्विजः ॥ ११ ॥ दद्यादतिथये नित्यम्बुध्येत परमेश्वरम् ॥
भिक्षामाहुर्ग्राससमात्रामग्रं तत्स्याच्चतुर्गुणम् ॥ १२ ॥ पुष्कलं हन्तकारन्तु तच्चतुर्गुणमुच्यते ॥ गोदोहकालमात्रं वै प्रतीक्ष्यो ह्यतिथिः स्वयम् ॥ १३ ॥
अभ्यागतान्यथाशक्ति पूजयेदतिथीन्सदा ॥ भिक्षां वै भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥ दद्यादन्नं यथाशक्ति ह्यर्थिभ्यो लोभवर्ज्जितः ॥ १४ ॥
सर्व्वेषामप्यलाभे हि त्वन्नङ्गोभ्यो निवेदयेत् ॥ भुञ्जीत बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन् ॥ १५ ॥ अकृत्वा तु द्विजः पञ्च महायज्ञा
न्द्विजोत्तमाः ॥ भुञ्जीत चेत्स मूढात्मा तिर्य्यग्योनिं स गच्छति ॥ १६ ॥ वेदाभ्यासोऽन्वहं शक्त्या महायज्ञः क्रियाक्षया ॥ नाशयन्त्याशु
पापानि देवताभ्यर्च्चनं तथा ॥ १७ ॥ यो मोहादथवाज्ञानादकृत्वा देवतार्च्चनम् ॥ भुङ्क्ते स याति नरकं सूकरं नात्र संशयः ॥ १८ ॥
तस्मात्सर्व्वप्रयत्नेन कृत्वा कर्म्माणि वै द्विजाः ॥ भुञ्जीत स्वजनैः सार्द्धं स याति परमां गतिम् ॥ १९ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे व्यास
गीतासु ब्राह्मणानां नित्यकर्तव्यकर्मनिरूपणं नामअष्टादशोऽध्यायः ॥ १८ ॥ ब्राह्मणानां नित्यकर्तव्यकर्मसु भोजनादिप्रकारः ॥ व्यास उवाच ॥
प्राङ्मुखोऽन्नानि भुञ्जीत सूर्य्याभिमुख एव वा ॥ आसीनः स्वासने शुद्धे भूम्यां पादौ निधाय च ॥ १ ॥ आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणा
मुखः ॥ श्रियम्प्रत्यङ्मुखो भुङ्क्ते ऋतम्भुङ्क्ते उदङ्मुखः ॥ २ ॥ पञ्चार्द्रो भोजनङ्कुर्य्याद्भूमौ पात्रं निधाय च ॥ उपवासेन तत्तुल्यं मनुराह
प्रजापतिः ॥ ३ ॥ उपलिप्ते शुचौ देशे पादौ प्रक्षाल्य वै करौ ॥ आचम्यार्द्राननोऽक्रोधः पञ्चार्द्रो भोजनञ्चरेत् ॥ ४ ॥ महाव्याहृतिभिस्त्वन्नं परि
धायोदकेन तु ॥ अमृतोपस्तरणमसीत्यापोऽशानक्रियाञ्चरेत् ॥ ५ ॥ स्वाहाप्रणवसंयुक्तां प्राणायाद्याहुतिन्ततः ॥ अपानाय ततो भुक्त्वा व्या

१ बलिं त्वन्नं पक्षिभ्योऽथ द्विजोत्तमा इति पा० । २ तस्माच्चतुर्गुणमिति, तस्याश्चतुर्गुणामिति पा० । ३ बन्धुभिरिति पा० । ४ मोहादथ बालत्वादकृत्वा इति पा० । ५ शूकरेष्वभिजायते इति पा० ।
६ आपःपानेति पा० ।

नाय तदनन्तरम् ॥ ६ ॥ उदानाय ततः कुर्य्यात्समानायेति पञ्चमम् ॥ विज्ञाय तत्त्वमेतेषां जुहुयादात्मनि द्विजः ॥ ७ ॥ शेषमन्नं यथाकामं भुञ्जीत व्यञ्जनैर्युतम् ॥ ध्यात्वा तन्मनसा देवानात्मानं वै प्रजापतिम् ॥ ८ ॥ अमृतापिधानमसीत्युपरिष्टादपः पिबेत् ॥ आचान्तः पुनराचामेदयंगौरिति मन्त्रतः ॥ ९ ॥ द्रुपदां वा त्रिरावर्त्य सर्वपापप्रणाशनीम् ॥ प्राणानां ग्रन्थिरसीत्यालभेदुदरन्ततः ॥ १० ॥ आचम्यांगुष्ठमात्रेण पादांगुष्ठेन दक्षिणे ॥ निस्रावयेद्धस्तजलमूर्द्ध्वहस्तः समाहितः ॥ ११ ॥ कृतानुमन्त्रणं कुर्य्यात्सन्ध्यायामिति मन्त्रतः ॥ अथाक्षरेणं स्वात्मानं योजयेद्ब्राह्मणेति हि ॥ १२ ॥ सर्व्वेषामेव योगानामात्मयोगः स्मृतः परः ॥ योऽनेन विधिना कुर्य्यात्स कविर्ब्राह्मणः स्वयम् ॥ १३ ॥ यज्ञोपवीती भुञ्जीत स्रग्गन्धालङ्कृतः शुचिः ॥ सायम्प्रातर्नान्तरा वै सन्ध्यायान्तु विशेषतः ॥ १४ ॥ नाद्यात्सूर्य्यग्रहात्पूर्व्वं प्रतिसायं शशिग्रहात् ॥ ग्रहकाले न चाश्नीयात्स्नात्वाश्नीयाद्विमुक्तये ॥ १५ ॥ मुक्ते शशिनि चाश्नीयाद्यदि न स्यान्महानिशा ॥ अमुक्तयोरस्तगयोरद्याद्दृष्ट्वा परेऽहनि ॥ १६ ॥ नाश्नीयात्प्रेक्षमाणानामप्रदाय च दुर्मतिः ॥ यज्ञावशिष्टमद्याद्वा न क्रुद्धो नान्यमानसः ॥ १७ ॥ आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम् ॥ वृत्त्यर्थं यस्य चाधीतं निष्फलं तस्य जीवितम् ॥ १८ ॥ यद्भुङ्क्ते वेष्टितशिरा यच्च भुङ्क्ते उदङ्मुखः ॥ सोपानत्कश्च यो भुङ्क्ते सर्व्वं विद्यात्तदासुरम् ॥ १९ ॥ नार्द्धरात्रे न मध्याह्ने नाजीर्णे नार्द्रवस्त्रधृक् ॥ न च भिन्नासनगतो न यानसंस्थितोऽपि वा ॥ २० ॥ न भिन्नभाजने चैव न भूम्यां न च पाणिषु ॥ नोच्छिष्टो घृतमादद्यात् न मूर्द्धानं स्पृशेदपि ॥ २१ ॥ न ब्रह्म कीर्त्तयेच्चापि न निःशेषं न भार्य्यया ॥ नान्धकारे न सन्ध्यायां न च देवालयादिषु ॥ २२ ॥ नैकवस्त्रस्तु भुञ्जीत न यानशयनस्थितः ॥ न पादुकानिर्गतोऽथ न हसन्विलपन्नपि ॥ २३ ॥ भुक्त्वा वै सुखमास्थाय तदन्नम्परिणामयेत् ॥ इतिहासपुराणाभ्यां वेदार्थानुपबृंहयेत् ॥ २४ ॥ ततः सन्ध्यामुपासीत पूर्व्वोक्तविधिना शुचिः ॥ आसीनश्च जपेद्देवीं गायत्रीं पश्चिमाम्प्रति ॥ २५ ॥ न तिष्ठति तु यः पूर्व्वामास्ते सन्ध्यान्तु पश्चिमाम् ॥ स शूद्रेण समो लोके सर्वकर्म्मविवर्जितः ॥ २६ ॥ हुत्वाग्निं विधिवन्मन्त्रैर्भुक्त्वा यज्ञावशिष्टकम् ॥ सभृत्यबान्धवजनः स्वपेच्छुष्कपदो निशि ॥ २७ ॥ नोत्तराभिमुखः स्वप्यात्पश्चिमाभिमुखो न च ॥ न चाकाशे न नग्नो वा नाशुचिर्नासने क्वचित् ॥

१ यथोक्तश्च इति पा० । २ देवमात्मानमिति पा० । ३ लभेत हृदयन्तत इति पा० । ४ अथ क्रमेणेति पा० । ५ स याति ब्रह्मणः क्षयमिति पा० । ६ न शयानः स्थितोऽपि वेति, न शय्यान्तःस्थितोऽपि वा इति पा० । ७ आदद्यादिति आर्षः प्रयोगः—आददीत इति साधु पा० । ८ न चाकाशे इति पा० । ९ तदर्थोऽनुपबृंहयेदिति पा० । १० धर्म्मेति, सर्व्वकर्म्मबहिष्कृत इति पा० ।

॥ २८ ॥ न शीर्णायान्तु खट्वायां शून्यागारे न चैव हि ॥ नानुवंशे न पालाशे शयने वा कदाचन ॥ २९ ॥ इत्येतदखिलेनोक्तमहन्यहनि वै मया ॥ ब्राह्मणानाङ्कृत्यजातमपवर्गफलप्रदम् ॥ ३० ॥ नास्तिक्यादथवालस्याद्ब्राह्मणो न करोति यः ॥ स याति नरकान्घोरान् काकयोनौ च जायते ॥ ३१ ॥ नान्यो विमुक्तये पन्था मुक्त्वाश्रमविधिं स्वकम् ॥ तस्मात्कर्म्माणि कुर्वीत तुष्टये परमेष्ठिनः ॥ ३२ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे व्यासगीतासु ब्राह्मणानां नित्यकर्तव्यकर्मसु भोजनादिप्रकारवर्णनं नामोनविंशोऽध्यायः ॥ १९ ॥ अथ श्राद्धकल्पः ॥ व्यास उवाच ॥ अथ श्राद्धममावास्यां प्राप्य कार्य्यं द्विजोत्तमैः ॥ पिण्डान्वाहार्य्यकम्भक्त्या भुक्तिमुक्तिफलप्रदम् ॥ १ ॥ पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ॥ अपराह्णे द्विजातीनां प्रशस्तेनामिषेण च ॥ २ ॥ प्रतिपत्प्रभृति ह्यन्यास्तिथयः कृष्णपक्षके ॥ चतुर्दशीं वर्ज्जयित्वा प्रशस्ता ह्युपरोधतः ॥ ३ ॥ अमावास्याष्टकास्तिस्रः पौषमासादिषु त्रिषु ॥ तिस्रस्तास्त्वष्टकाः पुण्या माघी पञ्चदशी तथा ॥ ४ ॥ त्रयोदशी मघायुक्ता वर्षासु च विशेषतः ॥ शस्यपाक श्राद्धकालाः नित्याः प्रोक्ता दिने दिने ॥ ५ ॥ नैमित्तिकन्तु कर्त्तव्यं ग्रहणे चन्द्रसूर्ययोः ॥ बान्धवानां विस्तरेण नारकी स्यादतोऽन्यथा ॥ ६ ॥ काम्यानि चैव श्राद्धानि शस्यन्ते ग्रहणादिषु ॥ अयने विषुवे चैव व्यतीपाते त्वनन्तकम् ॥ ७ ॥ संक्रान्त्यामक्षयं श्राद्धं तथा जन्मदिनेष्वपि ॥ नक्षत्रेषु च सर्व्वेषु कार्य्यङ्काले विशेषतः ॥८॥ स्वर्गञ्च लभते कृत्वा कृत्तिकासु द्विजोत्तमः॥ अपत्यमथ रोहिण्यां सौम्ये तु ब्रह्मवर्चसम् ॥ ॥९॥ रौद्राणां कर्म्मणां सिद्धिमार्द्रायां शौर्य्यमेव चँ॥ पुनर्वसौ तथा भूमिं श्रियं पुष्ये तथैव च॥ सर्व्वान्कामांस्तथा सार्प्ये पित्र्ये सौभाग्यमेव च॥१०॥ अर्यम्णे तु धनं विन्द्येत् फाल्गुन्यां पापनाशनम् ॥११॥ ज्ञातिश्रैष्ठ्यं तथा हस्ते चित्रायाञ्च बहून् सुतान् ॥ वाणिज्यसिद्धिं स्वातौ तु विशाखासु सुवर्णकम् ॥१२॥ मैत्रे बहूनि मित्राणि राज्यं शाक्रे तथैव च ॥ मूले कृषिं लभेज्ज्ञानं सिद्धिमाप्ये समुद्रतः ॥१३॥ सर्व्वान् कामान्वैश्वदेवे श्रैष्ठ्यन्तु श्रवणे पुनः ॥ धनिष्ठायां तथा कामानम्बुपे च परम्बलम् ॥१४॥ अजैकपादे कुप्यं स्यादाहिर्बुध्ने गृहं शुभम् ॥ रेवत्याम्बहवो गावो ह्यश्विन्यान्तुरगांस्तथा ॥ याम्ये तु जीवितन्तु स्याद्यः श्राद्धं सम्प्रयच्छति॥१५॥आदित्यवारेऽन्वारोग्यं चन्द्रे सौभाग्यमेव च॥कुजे सर्वत्र विजयं सर्वान् कामान् बुधस्य तु १६

---

१ नापि वैणे इति पा० । २ कृत्यतममिति पा० । ३ क्षीणे राजनि क्षययुक्ते चन्द्रे कृष्णपक्षे इत्यर्थः । ४ ह्यपरा यतः इति, ह्युत्तरोत्तरे इति पा० । ५. तिस्रश्चान्वाहार्य्यकमिति पा० । ६ ब्राह्मणानाञ्च मरणे इति, बान्धवानाञ्च मरणे इति पा० । ७ रौद्राणां सिद्धिमार्द्रायां कर्म्मणां सौख्यमेव चेति, रोहिण्यां कर्म्मणां सिद्धिमिति पा० । ८ शाविष्ठायां तथा काम्यं वारुणे इति पा०।

विद्यामभीष्टान्तु गुरौ धनं वै भार्गवे पुनः ॥ शनैश्चरे लभेदायुः प्रतिपत्सु सुतान् शुभान् ॥ १७ ॥ कन्यका वै द्वितीयायां तृतीयायान्तु विन्दति ॥ पशून् क्षुद्रांश्चतुर्थ्यां वै पञ्चम्यां शोभनान् सुतान् ॥१८॥ षष्ठ्यां द्युतिं कृषिञ्चापि सप्तम्याञ्च धनं नरः ॥ अष्टम्यामपि वाणिज्यं लभते श्राद्धदः सदा ॥ १९ ॥ स्यान्नवम्यामेकखुरं दशम्यां द्विखुरं बहु ॥ एकादश्यान्तथा रूप्यं ब्रह्मवर्चस्विनः सुतान् ॥ २० ॥ द्वादश्यां जातरूपञ्च रजतं कुप्यमेव च ॥ ज्ञातिश्रैष्ठ्यं त्रयोदश्यां चतुर्दश्यान्तु कुप्रजाः ॥ पञ्चदश्यां सर्व्वकामान् प्राप्नोति श्राद्धदः सदा॥२१॥तस्माच्छ्राद्धं न कर्त्तव्यं चतुर्दश्यां द्विजातिभिः ॥ शस्त्रेण तु हतानान्तु श्राद्धं तत्र प्रकल्पयेत् ॥ २२ ॥ द्रव्यब्राह्मणसम्पत्तौ न कालनियमः कृतः ॥ तस्माद्भोगापवर्गार्थं श्राद्धं कुर्युर्द्विजातयः ॥ ॥२३॥ कर्म्मारम्भेषु सर्व्वेषु कुर्य्यादभ्युदये पुनः ॥ पुत्रजन्मादिषु श्राद्धं[1] पावर्णपर्वसु स्मृतम् ॥२४॥ अहन्यहनि नित्यं स्यात्काम्यं नैमित्तिकं पुनः॥ एकोद्दिष्टादि विज्ञेयं द्विधा श्राद्धन्तु पार्वणम् ॥ २५ ॥ एतत्पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम् ॥ यात्रायां षष्ठमाख्यातं तत्प्रयत्नेन पालयेत् ॥ २६ ॥ शुद्धये सप्तमं श्राद्धं ब्रह्मणा परिभाषितम् ॥ दैविकञ्चाष्टमं श्राद्धं यत्कृत्वा मुच्यते भयात् ॥ २७ ॥ सन्ध्यां रात्रौ न कर्त्तव्यं राहोरन्यत्र दर्शनात् ॥ देशानान्तु विशेषेण भवेत्पुण्यमनन्तकम् ॥ २८ ॥ गंगायामक्षयं श्राद्धं प्रयागेऽमरकण्टके ॥ गायन्ति पितरो गाथां[2] नर्त्तयन्ति मनीषिणः ॥ २९ ॥ एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः ॥ तेषान्तु समवेतानां यद्येकोऽपि गयां व्रजेत् ॥ ३० ॥ गयां प्राप्यानुषंगेण यदि श्राद्धं समाचरेत् ॥ तारिताः पितरस्तेन स याति परमाङ्गतिम् ॥ ३१ ॥ वाराहपर्व्वते चैव गयायां वै विशेषतः ॥ वाराणस्यां विशेषेण यत्र देवः स्वयं हरः ॥ ३२ ॥ गंगाद्वारे प्रभासे तु बिल्वके नीलपर्व्वते ॥ कुरुक्षेत्रे च कुब्जाम्रे भृगुतुंगे महालये ॥ ३३ ॥ केदारे फल्गुतीर्थे[3] च नैमिषारण्य एव च ॥ सरस्वत्यां विशेषेण पुष्करे तु विशेषतः ॥ ३४ ॥ नर्म्मदायां कुशावर्त्ते श्रीशैले भद्रकर्णके ॥ वेत्रवत्यां विशाखायां[4] गोदावर्यां विशेषतः ॥ ३५ ॥ एवमादिषु चान्येषु तीर्थेषु पुलिनेषु च ॥ नदीनाञ्चैव तीरेषु तुष्यन्ति पितरः सदा ॥ ३६ ॥ व्रीहिभिश्च यवैर्माषैरद्भिर्मूलफलेन वा ॥ श्यामाकैश्च यवैः[5] काशैर्नीवारैश्च प्रियङ्गुभिः ॥ गोधूमैश्च तिलैर्मुद्गैर्मांसं प्रीणयते पितॄन् ॥ ३७ ॥ आम्रान् पाने रतानिक्षून् मृद्वीकांश्च सदाड़िमान् ॥ विदाश्वांश्च[6] कुरण्डांश्च श्राद्धकाले प्रदापयेत् ॥३८॥ लाजान्मधुयुतान् दद्यात्सक्तून् शर्करया सह ॥ दद्याच्छ्राद्धे प्रयत्नेन शृंगाटककशेरुकान्[7] ॥३९॥



१ वृद्धिश्राद्धन्तु इति पा० । २ गाथाः कीर्त्तयन्ति इति पा० । ३ फल्गुनीतीर्थे इति पा० । ४ विपाशायामिति जैत्रवत्यां विशेषेण इति पा० । ५ शुभैऽशाकैरिति पा० । ६ विदारीश्च भरण्डां इति, विदार्य्यांश्च सकेण्डांश्च इति पा० । ७ शृङ्गाटविषकेबुकानिति पा० ।

द्वौ मासौ मत्स्यमांसेन त्रीन्मासान् हरिणे तु ॥ औरभ्रेणाथ चतुरः शाकुनेनेह पञ्च तु ॥ षण्मासांश्छागमांसेन पार्षतेनेह सप्त वै ॥४०॥ अष्टावेणस्य मांसेन रौरवेण नवैव तु ॥ दशमासांस्तु तृप्यन्ति वराहमहिषामिषैः ॥ ४१ ॥ शशकूर्म्मयोर्मांसेन मासानेकादशैव तु ॥ संवत्सरन्तु गव्येन पयसा पायसेन तु ॥ वार्ध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी ॥ ४२ ॥ कालशाकं महाशल्कः खड्गलोहामिषं मधु ॥ आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्व्वशः ॥ ४३ ॥ क्रीत्वा लब्ध्वा स्वयं वाथ मृतानाहृत्य वै द्विजः ॥ दद्याच्छ्राद्धे प्रयत्नेन तदस्याक्षयमुच्यते ॥४४॥ पिप्पली रुचकश्चैव तथा चैव मसूरकम् ॥ कूष्माण्डालाबुवार्त्ताकभूतृणं सरसं तथा॥४५॥कुसुम्भपिण्डमूलं वै तन्दुलीयकमेव च ॥ राजमाषांस्तथा क्षीरं माहिषाजं विवर्ज्जयेत् ॥४६॥ आढक्यः कोविदाराश्च पालक्या मरिचास्तथा ॥ वर्जयेत्सत्त यत्नेन श्राद्धकाले द्विजोत्तमः॥४७॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे व्यासगीतासु श्राद्धकल्पे विंशोऽध्यायः ॥ २० ॥ व्यास उवाच ॥ स्नात्वा यथोक्तं सन्तर्प्य पितॄंश्चन्द्रक्षये द्विजः ॥ पिण्डान्वाहार्यकं श्राद्धं कुर्य्यात्सौम्यमनाः शुचिः ॥ १ ॥ पूर्व्वमेव समीक्षेत ब्राह्मणं वेदपारगम् ॥ तीर्थं तद्धव्यकव्यानां प्रदानानाञ्च स स्मृतः ॥ २ ॥ ये सोमपा विरजसो धर्म्मज्ञाः शान्तचेतसः ॥ व्रतिनो नियमस्थाश्च ऋतुकालाभिगामिनः॥३॥ पञ्चाग्निरप्यधीयानो यजुर्वेदविदेव च ॥ बह्वृचश्च त्रिसौपर्णस्त्रिमधुर्वा च योऽभवत्॥४॥ त्रिणाचिकेतच्छन्दोगो ज्येष्ठसामग एव च ॥ अथर्वशिरसोऽध्येता रुद्राध्यायी विशेषतः ॥ ५ ॥ अग्निहोत्रपरो विद्वान्न्यायविच्च षडङ्गवित् ॥ मन्त्रब्राह्मणविच्चैव यश्च स्याद्ध र्म्मपाठकः ॥ ६ ॥ ऋषिव्रती ऋषीकश्च शान्तचेता जितेन्द्रियः ॥ ब्रह्मदेयानुसन्तानो गर्भशुद्धः सहस्रदः ॥ ७॥ चान्द्रायणव्रतचरः सत्यवादी पुराणवित् ॥ गुरुदेवाग्निपूजासु प्रसक्तो ज्ञानतत्परः ॥ ८ ॥ विमुक्तः सर्व्वतो धीरो ब्रह्मभूतो द्विजोत्तमः ॥ महादेवार्चनरतो वैष्णवः पंक्तिपावनः ॥९॥ अहिंसानिरतो नित्यमप्रतिग्रहणस्तथा ॥ सत्री च दाननिरतो विज्ञेयः पंक्तिपावनः ॥ १० ॥ ( युवानः श्रोत्रियाः स्वस्था महायज्ञपरायणाः ॥ सावित्रीजापनिरता ब्राह्मणाः पंक्तिपावनाः॥ कुलानां श्रुतवन्तश्च शीलवन्तस्तपस्विनः॥अग्निचित् स्नातको विप्रो विज्ञेयाः पंक्तिपावनाः) मातापित्रोर्हिते युक्तः प्रातःस्नायी तथा द्विजः ॥ अध्यात्मविन्मुनिर्दान्तो विज्ञेयः पंक्तिपावनः ॥ ११ ॥ ज्ञाननिष्ठो महायोगी वेदान्तार्थविचिन्तकः ॥ श्रद्धालुः श्राद्धनिर

१ पार्षतेनाथ इति पा० । २ मासास्तु तृप्यन्ते इति पा० । ३ शशकूर्म्मयोस्तु मांसेनेति पा० । ४ पिप्पली क्रमुकश्चैव इति पा० । ५ परीक्षेत इति पा० । ६ मदाने चातिथिस्मृतः इति पा० । ७ तथा द्वादशवार्षिकः इति पा० । ८ सतृण इति पा० ।

104

तो ब्राह्मणः पंक्तिपावनः ॥ १२ ॥ वेदविद्यारतः स्नातो ब्रह्मचर्य्यपरः सदा ॥ अथर्वणो मुमुक्षुश्च ब्राह्मणः पंक्तिपावनः ॥ १३ ॥ असमानप्रवरको ह्यसगोत्रस्तथैव च ॥ सम्बन्धशून्यो विज्ञेयो ब्राह्मणः पंक्तिपावनः ॥ १४ ॥ भोजयेद्योगिनं शान्तं तत्त्वज्ञानरतं यतः ॥ अभावे नैष्ठिकं दान्तमुपकुर्व्वाणकन्तथा ॥ १५ ॥ तदलाभे गृहस्थन्तु मुमुक्षुं सङ्गवर्जितम् ॥ सर्व्वालाभे साधकं वा गृहस्थमपि भोजयेत् ॥ १६ ॥ प्रकृतेर्गुणतत्वज्ञो यस्याश्नाति यतिर्हविः ॥ फलं वेदान्तवित्तस्यं सहस्राद‌तिरिच्यते ॥ १७ ॥ तस्माद्यत्नेन योगीन्द्रमीश्वरज्ञानतत्परम् ॥ भोजयेद्धव्यकव्येषु अलाभादितरान्द्विजान् ॥ १८ ॥ एष वै प्रथमः कल्पः प्रदाने हव्यकव्ययोः ॥ अनुकल्पस्त्वयं ज्ञेयः सदा सद्भिरनुष्ठितः ॥ १९ ॥ मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुम् ॥ दौहित्रं विट्पतिम्बन्धुमृत्विग्याज्यौ च भोजयेत् ॥ २० ॥ न श्राद्धे भोजयेन्मित्रं धनैः कार्य्योऽस्य संग्रहः ॥ पैशाची दक्षिणा शा हि नेहामुत्र फलप्रदा ॥ २१ ॥ कामं श्राद्धेऽर्च्चयेन्मित्रं नाभिरूपमपि त्वरिम् ॥ द्विषता हि हविर्भुक्तं भवति प्रेत्य निष्फलम् ॥ २२ ॥ ब्राह्मणो ह्यनधीयानस्तृणाग्निरिव शाम्यति॥तस्मै हव्यं न दातव्यं न हि भस्मनि हूयते॥२३॥यथोषरे बीजमुप्त्वा न वप्ता लभते फलम्॥तथाऽनृचे हविर्दत्त्वा न दाता लभते फलम् ॥ २४ ॥ यावतो ग्रसते पिण्डान्हव्यकव्येष्वमन्त्रवित् ॥ तावतो ग्रसते प्रेत्य दीप्तान् स्थूलांस्त्वयोगुडान् ॥ २५ ॥ अपि विद्याकुलैर्युक्ता हीनवृत्ता नराधमाः॥ यत्रैते भुञ्जते हव्यं तद्भवेदासुरं द्विजाः॥२६॥यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम्॥ स वै दुर्ब्राह्मणो नार्हः श्राद्धादिषु कदाचन॥२७॥शूद्रप्रेष्यो भृतो राज्ञो वृषलानाञ्च याजकः ॥ वधबन्धोपजीवी च षडेते ब्रह्मबन्धवः॥२८॥दत्वानुयोगो द्रव्यार्थं पतितान्मनुरब्रवीत् ॥ वेदविक्रयिणो ह्येते श्राद्धादिषु विगर्हिताः ॥ २९ ॥ सुतविक्रयिणो ये तु परपूर्व्वासमुद्भवाः ॥ असामान्यान् यजन्ते ये पतितास्ते प्रकीर्त्तिताः॥ ३० ॥ असंस्कृताध्यापका ये भृत्यर्थेऽध्यापयन्ति ये ॥ अधीयते तथा वेदान् पतितास्ते प्रकीर्त्तिताः ॥ ३१ ॥ वृद्धश्रावकनिर्ग्रन्थाः पञ्चरात्रविदो जनाः ॥ कापालिकाः पाशुपताः पाषण्डा ये च तद्विधाः ॥ ३२ ॥ यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः ॥ न तस्य तद्भवेच्छ्राद्धं प्रेत्य चेह फलप्रदम् ॥ ३३ ॥ अनाश्रमी द्विजो यः स्यादाश्रमी वा निरर्थकः ॥ मिथ्याश्रमी च ते विप्रा विज्ञेयाः पङ्क्तिदूषकाः ॥३४॥ दुश्चर्म्मा कुनखी कुष्ठी श्वित्री च

१ अलाभे इति पा० । २ वेदविदां ,तस्य इति पा० । ३ दाता लभते इति पा० । ४ दीप्तानलानयोगुडानिति पा० । ५ शूद्रप्रेष्यो भृतो राज्ञ इति पा० । ६ वृषली ग्रामयाजकः इति पा० । ७ निबन्धकः इति पा० ।

प्रहसन्निव ॥ १७ ॥ तमुवाच भयाविष्टो राजा रुद्रपरायणः ॥ एकमीशार्च्चनरतं विहायान्यान्निषूदय ॥ १८ ॥ इत्युक्तवन्तं भगवानब्रवीद्भीतमानसम् ॥ रुद्रार्च्चनरतो वान्यो मद्वशे को न तिष्ठति ॥ १९ ॥ एवमुक्त्वा स राजानं कालो लोकप्रकालनः ॥ बबन्ध पाशै राजापि जजाप शतरुद्रियम् ॥ २० ॥ अथान्तरिक्षे विपुलं दीप्यमानं तेजोराशिं भूतभर्त्तुः पुराणम् ॥ ज्वालामालासंवृतं व्याप्य विश्वं प्रादुर्भूतं संस्थितं सन्ददर्श ॥ २१ ॥ तन्मध्येऽसौ पुरुषं रुक्मवर्णं देव्या देवं चन्द्रलेखोज्ज्वलाङ्गम् ॥ तेजोरूपं पश्यति स्मातिहृष्टो मेने चात्मानमप्यागच्छंतीति ॥ २२ ॥ आगच्छन्तं नातिदूरेति दृष्ट्वा कालो रुद्रं देवदेव्यां महेशम् ॥ व्यपेतभीरखिलेशैकनाथं राजर्षिस्तन्नेतुमभ्याजगाम ॥ २३ ॥ आलोक्यासौ भगवानुग्रकर्म्मा देवो रुद्रो भूतभर्त्ता पुराणः ॥ एवं भक्तं सत्वरं मां स्मरन्तं देहीतीमं कालरूपं ममेति ॥ २४ ॥ श्रुत्वा वाक्यं गोपते रुद्रभावः कालात्मासौ मन्यमानः स्वभावम् ॥ बद्ध्वा भक्तं पुनरेवाथ पाशै रुद्रो रौद्रं चाभिदुद्राव वेगात् ॥ २५ ॥ प्रेक्ष्यायान्तं शैलपुत्रीमथेशः सोऽन्वीक्ष्यान्ते विश्वमायाविधिज्ञः ॥ सावज्ञं वै वामपादेन कालन्त्वेतस्यैनं पश्यतो व्याजघान ॥ २६ ॥ ममार सोऽतिभीषणो महेशपादघातितः ॥ विराजते सहोमया महेश्वरः पिनाकधृक् ॥ २७ ॥ निरीक्ष्य देवमीश्वरं प्रहृष्टमानसो हरम् ॥ ननाम वै तमव्ययं स राजपुङ्गवस्तदा ॥ २८ ॥ नमो भवाय हेतवे हराय विश्वशम्भवे ॥ नमः शिवाय धीमते नमोऽपवर्गदायिने ॥ २९ ॥ नमो नमो नमो नमो महाविभूतये नमः ॥ विभागहीनरूपिणे नमो नराधिपाय ते ॥ ३० ॥ नमोऽस्तु ते गणेश्वर प्रपन्नदुःखशासन ॥ अनादिनित्यभूतये वराहशृङ्गधारिणे ॥ ३१ ॥ नमो वृषध्वजाय ते कपालमालिने नमः ॥ नमो महानगाय ते शिवाय शङ्कराय ते ॥ ३२ ॥ अथानुगृह्य शङ्करः प्रणामतत्परं नृपम् ॥ स्वगाणपत्यमव्ययं स्वरूपतामथो ददौ ॥ ३३ ॥ सहोमया सपार्षदः सराजपुंगवो हरः ॥ मुनीशसिद्धवन्दितः क्षणाददृश्यतामगात् ॥ ३४ ॥ काले महेशनिर्हते लोकनाथः पितामहः ॥ अयाचत वरं रुद्रं सजीवोऽयं भवत्विति ॥ ३५ ॥ नास्ति कश्चिदपीशान दोषलेशो वृषध्वज ॥ कृतान्तस्यैव भविता तत्कार्य्यें विनियोजितः ॥ ३६ ॥ स देवदेववचनाद्देवदेवेश्वरो हरः ॥ तथास्त्वित्याह विश्वात्मा सोऽपि तादृग्विधोऽभवत् ॥ ३७ ॥ इत्येतत्परमं तीर्थं कालञ्जरमिति श्रुतम् ॥ गत्वाभ्य

---

१ मेने चात्मनाथ आगच्छतीति इति, मेने चात्मानमथागच्छतीति इति पा० । २ अखिलस्यैकनाथामिति पा० । ३ स्वाज देवतापतिः सहोमयेति, स्वाम देवता_शिवः सहोमया इति पा० । ४ महेशाभिहते इति पा० ।

र्च्य महादेवं गाणपत्यं स विन्दति ॥ ३८ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे कालवधे षट्त्रिंशोऽध्यायः ॥ ३६ ॥ सूत उवाच ॥ इदमन्यत्परं स्थानं गुह्याद्गुह्यतरं महत् ॥ महादेवस्य देवस्य महालय इति श्रुतम् ॥ १ ॥ तत्र देवादिदेवेन रुद्रेण त्रिपुरारिणा ॥ शिलातले पदं न्यस्तं नास्तिकानां निदर्शनम् ॥ २ ॥ तत्र पाशुपताः शान्ता भस्मोद्धूलितविग्रहाः ॥ उपासते महादेवं वेदाध्ययनतत्पराः ॥ ३ ॥ स्नात्वा तत्र पदं शार्वं दृष्ट्वा भक्तिपुरःसरम् ॥ नमस्कृत्वाथ शिरसा रुद्रसामीप्यमाप्नुयात् ॥ ४ ॥ अन्यच्च देवदेवस्य स्थानं शम्भोर्महात्मनः ॥ केदारमिति विख्यातं सिद्धानामालयं शुभम् ॥ ५ ॥ तत्र स्नात्वा महादेवमभ्यर्च्य वृषकेतनम् ॥ पीत्वा चैवोदकं शुद्धं गाणपत्यमवाप्नुयात् ॥ ६ ॥ श्राद्धदानादिकं कृत्वा ह्यक्षयं लभते फलम् ॥ द्विजातिप्रवरैर्जुष्टं योगिभिर्जितमानसैः ॥ ७ ॥ तीर्थं प्लक्षावतरणं सर्व्वपापविनाशनम् ॥ तत्राभ्यर्च्य श्रीनिवासं विष्णुलोके महीयते ॥ ८ ॥ अन्यच्च मगधारण्यं सर्व्वलोकगतिप्रदम् ॥ अक्षयं विन्दते स्वर्गं तत्र गत्वा द्विजोत्तमः ॥ ९ ॥ तीर्थं कनखलं पुण्यं महापातकनाशनम् ॥ यत्र देवेन रुद्रेण यज्ञो दक्षस्य नाशितः ॥ १० ॥ तत्र गंगामुपस्पृश्य शुचिर्भावसमन्वितः ॥ मुच्यते सर्व्वपापैस्तु ब्रह्मलोके वसेन्नरः ॥ ११ ॥ महातीर्थमिति ख्यातं पुण्यं नारायणप्रियम् ॥ तत्राभ्यर्च्य हृषीकेशं श्वेतद्वीपं स गच्छति ॥ १२ ॥ अन्यच्च तीर्थप्रवरं नाम्ना श्रीपर्व्वतं शुभम् ॥ अत्र प्राणान्परित्यज्य रुद्रस्य दयितो भवेत् ॥ १३ ॥ तत्र सन्निहितो रुद्रो देव्या सह महेश्वरः ॥ स्नानपिण्डादिकं तत्र दत्तमक्षय्यमुत्तमम् ॥ १४ ॥ गोदावरी नदी पुण्या सर्व्वपापप्रणाशिनी ॥ तत्र स्नात्वा पितॄन्देवांस्तर्पयित्वा यथाविधि ॥ १५ ॥ सर्व्वपापविशुद्धात्मा गोसहस्रफलं लभेत् ॥ पवित्रसलिला पुण्या कावेरी विपुला नदी ॥ १६ ॥ तस्यां स्नात्वोदकं कृत्वा मुच्यते सर्व्वपातकैः ॥ त्रिरात्रोपोषितेनाथ एकरात्रोषितेन वा ॥ १७ ॥ द्विजातीनान्तु कथितं तीर्थानामिह सेवनम् ॥ यस्य वाङ्मनसी शुद्धे हस्तपादौ च संस्थितौ ॥ ॥ १८ ॥ अलोलुपो ब्रह्मचारी तीर्थानां फलमाप्नुयात् ॥ स्वामितीर्थं महातीर्थं त्रिषु लोकेषु विश्रुतम् ॥ १९ ॥ तत्र सन्निहितो नित्यं स्कन्दोऽमरनमस्कृतः ॥ स्नात्वा कुमारधारायां कृत्वा देवादितर्पणम् ॥ २० ॥ आराध्य षण्मुखं देवं स्कन्देन सह मोदते ॥ नदी त्रैलोक्यविख्याता ताम्रपर्णीति नामतः ॥ २१ ॥ तत्र स्नात्वा पितॄन्भक्त्या तर्पयित्वा यथाविधि ॥ पापकर्तॄनपि पितॄंस्तारयेन्नात्र संशयः ॥ २२ ॥ चन्द्रतीर्थमिति

१ आर्षोऽयं प्रयोगः। २ नमस्कृत्य इति साधु। ३ सारूप्यमिति पा०। ४ ब्रह्मलोकं लभेन्मृतः इति, लोकं व्रजेन्नर इति पा०। ५ आर्षोऽयं प्रयोगः। लभेत इति साधु। ६ उदकं कृत्वा—उदककार्यं पितृतर्पणं कृत्वा इत्यर्थः।

ख्यातं कावेर्य्याः प्रभवेऽक्षयम् ॥ तीर्थे तत्र भवेद्दत्तं मृतानां सद्गतिप्रदम् ॥ २३ ॥ विन्ध्यपादे प्रपश्यन्ति देवदेवं सदाशिवम् ॥ भक्ता ये ते न पश्यन्ति यमस्य वदनं द्विजाः ॥ २४ ॥ देविकायां वृषो नाम तीर्थं सिद्धनिषेवितम् ॥ तत्र स्नात्वोदकं कृत्वा योगसिद्धिञ्च विन्दति ॥ २५ ॥ दशाश्वमेधिकं तीर्थं सर्व्वपापविनाशकम् ॥ दशानामश्वमेधानां तत्राप्नोति फलं नरः ॥ २६ ॥ पुण्डरीकं तथा तीर्थं ब्राह्मणैरुपशोभितम् ॥ तत्राभिगम्य युक्तात्मा पुण्डरीकफलं लभेत् ॥ २७ ॥ तीर्थेभ्यः परमं तीर्थं ब्रह्मतीर्थमिति स्मृतम् ॥ ब्रह्माणमर्चयित्वात्र ब्रह्मलोके महीयते ॥ २८ ॥ सरस्वत्या विनशनं प्लक्षप्रस्रवणं शुभम् ॥ व्यासतीर्थमिति ख्यातं मैनाकश्च नगोत्तमः ॥ २९ ॥ यमुनाप्रभवश्चैव सर्व्वपापविनाशनः ॥ पितॄणां दुहिता देवी गन्धकालीति विश्रुता ॥ ३० ॥ तस्यां स्नात्वा दिवं याति मृतो जातिस्मरो भवेत् ॥ कुबेरतुङ्गं पापघ्नं सिद्धचारणसेवितम् ॥ ३१ ॥ प्राणांस्तत्र परित्यज्य कुबेरानुचरो भवेत् ॥ उमातुङ्गमिति ख्यातं यत्र सा रुद्रवल्लभा ॥ ३२ ॥ तत्राभ्यर्च्य महादेवीं गोसहस्रफलं लभेत् ॥ भृगुतुङ्गे तपस्तप्तं श्राद्धं दानं तथा कृतम् ॥ ३३ ॥ कुलान्युभयतः सप्त पुनातीति मतिर्म्मम ॥ काश्यपस्य महातीर्थं कालसर्पिरिति श्रुतम् ॥ ॥ ३४ ॥ तत्र श्राद्धानि देयानि नित्यं पापक्षयेच्छया ॥ दशार्णायां तथा दानं श्राद्धं होमन्तपो जपः ॥ ३५ ॥ अक्षयञ्चाव्ययञ्चैव कृतं भवति सर्व्वदा ॥ तीर्थं द्विजातिभिर्जुष्टं नाम्ना वै कुरुजाङ्गलम् ॥ ३६ ॥ दत्त्वा तु दानं विधिवद्ब्रह्मलोके महीयते ॥ वैतरण्यां महातीर्थे स्वर्णवेद्यां तथैव च ॥ ३७ ॥ धर्मपृष्ठे च शिरसि ब्रह्मणः परमे शुभे ॥ भरतस्याश्रमे पुण्ये पुण्ये गृध्रवने शुभे ॥ ३८ ॥ महाह्रदे च कौशिक्यां दत्तं भवति चाक्षयम् ॥ मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥ ३९ ॥ हिताय सर्व्वभूतानां नास्तिकानां निदर्शनम् ॥ अल्पेनापि तु कालेन नरो धर्म्मपरायणः ॥ ४० ॥ पाप्मानमुत्सृजत्याशु जीर्णान्त्वचमिवोरगः ॥ नाम्ना कनकनन्देति तीर्थं त्रैलोक्यविश्रुतम् ॥ ४१ ॥ उदीच्यां ब्रह्मपृष्ठस्य ब्रह्मर्षिगणसेवितम् ॥ तत्र स्नात्वा दिवं यान्ति सशरीरा द्विजातयः ॥ ४२ ॥ दत्तं वापि सदा श्राद्धमक्षयं समुदाहृतम् ॥ ऋणैस्त्रिभिर्नरः स्नात्वा मुच्यते क्षीणकल्मषः ॥ ४३ ॥ मानसे सरसि स्नात्वा शक्रस्यार्द्धासनं लभेत् ॥ उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ ४४ ॥

---

१ कावेर्य्याश्च भवक्षयमिति पा० । २ स्वर्गतिर्ध्रुवा इति पा० । ३ उत्तमाङ्गमितीति पा० । ४ दत्तं भवति नान्यथा इति पा० । ५ स्वर्णवत्यामिति, स्वर्णनद्यामिति पा० । ६ क्षेत्रे श्राद्धवटे इति, पुण्ये श्राद्धवटे इति पा० । ७ मुञ्जपृष्ठस्येति, मुण्डपृष्ठस्येति पा० । ८ घोरकल्मषःइति पा० । ९ अनुत्तमाम्—नास्ति उत्तमा यस्याः सा अनुत्तमा ताम् सर्व्वोत्कृष्टामित्यर्थः ।

तस्मान्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् ॥ स कामान् लभते दिव्यान्मोक्षोपायश्च विन्दति ॥ ४५ ॥ पर्व्वतो हिमवान्नाम नानाधातुविभूषितः ॥ योजनानां सहस्राणि साशीतिस्त्वायतो गिरिः ॥ ४६ ॥ सिद्धचारणसंकीर्णो देवर्षिगणसेवितः ॥ तत्र पुष्करिणी रम्या सुषुम्ना नाम नामतः ॥ ४७ ॥ तत्र गत्वा द्विजो विद्वान्ब्रह्महत्यां विमुञ्चति ॥ श्राद्धं भवति चाक्षय्यं तत्र दत्तं महोदयम् ॥ ४८ ॥ तारयेच्च पितॄन्सम्यग्दश पूर्व्वान्दशापरान् ॥ सर्व्वत्र हिमवान् पुण्यो गंगा पुण्या समंततः ॥ ४९ ॥ नद्यः समुद्रगाः पुण्याः समुद्रश्च विशेषतः ॥ बदर्य्याश्रममासाद्य मुच्यते सर्व्वकिल्बिषात् ॥ ५० ॥ तत्र नारायणो देवो नरेणास्ते सनातनः ॥ अक्षयं तत्र दानं स्याच्छ्राद्धदानादिकञ्च यत् ॥ ॥ ५१ ॥ महादेवप्रियं तीर्थं पावनं तद्विशेषतः ॥ तारयेच्च पितॄन्सर्व्वान्दत्वा श्राद्धं समाहितः ॥ ५२ ॥ देवदारुवनं पुण्यं सिद्धगन्धर्व्वसेवितम् ॥ महता देवदेवेन तत्र दत्तं महेश्वरम् ॥ ५३ ॥ मोहयित्वा मुनीन्सर्व्वान्समस्तैः सम्प्रपूजितः ॥ प्रसन्नो भगवानीशो मुनीन्द्रान् प्राह भावितान् ॥५४॥ इहाश्रमवरे रम्ये निवसिष्यथ सर्व्वदा ॥ भद्रावनासमायुक्तास्ततः सिद्धिमवाप्स्यथ ॥ ५५ ॥ यत्र मामर्चयन्तीह लोके धर्म्मपरायणाः ॥ तेषां ददामि परमङ्गाणपत्यं हि शाश्वतम् ॥ ५६ ॥ अत्र नित्यं वसिष्यामि सह नारायणेन तु ॥ प्राणानिह नरस्त्यक्त्वा न भूयो जन्म चाप्नुयात् ॥ ५७ ॥ संस्मरन्ति च ये तीर्थं देशान्तरगता जनाः ॥ तेषाञ्च सर्व्वपापानि नाशयामि द्विजोत्तमाः ॥ ५८ ॥ श्राद्धं दानं तपो होमः पिण्डनिर्व्वपणं तथा ॥ ध्यानं जपश्च नियमः सर्व्वमत्राक्षयङ्कृतम् ॥ ५९ ॥ तस्मात्सर्व्वप्रयत्नेन द्रष्टव्यं हि द्विजातिभिः ॥ देवदारुवनं पुण्यं महादेवनिषेवितम् ॥ ६० ॥ यत्रेश्वरो महादेवो विष्णुर्वा पुरुषोत्तमः ॥ तत्र सन्निहिता गंगा तीर्थान्यायतनानि च ॥ ६१ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे तीर्थवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

देवदारुवनप्रवेशः ॥ ऋषय ऊचुः ॥ कथं दारुवनम्प्राप्तो भगवान्गोवृषध्वजः ॥ मोहयामास विप्रेन्द्रान्सूत तद्वक्तुमर्हसि ॥ १ ॥ सूत उवाच ॥ पुरा दारुवने रम्ये देवसिद्धनिषेविते ॥ सपुत्रदारतनयास्तपश्चेरुः सहस्रशः ॥ २ ॥ प्रवृत्तं विविधङ्कर्म्म प्रकुर्व्वाणा यथाविधि ॥ यजन्ति विविधैर्यज्ञैस्तपन्ति च महर्षयः ॥ ३ ॥ तेषां प्रवृत्तिविन्यस्तचेतसामथ शूलभृत् ॥ व्याख्यापयन्सदा दोषं ययौ दारुवनं हरः ॥ ४ ॥ कृत्वा विश्वगुरुं विष्णुं पार्श्वे देवो महेश्वरः ॥ ययौ निवृत्तविज्ञानस्थापनार्थञ्च शङ्करः ॥ ५ ॥ आस्थाय विपुलञ्चैप जनं विंशतिवत्स

१ जप्ता वापि तथाविधमिति पा० । २ निवत्स्यथेति साधु । ३ विन्दतीति पा० । ४ दारुवने देवः इति पा० । ५ वक्तुमिहार्हसीति, नरस्तं वक्तुमिहार्हसीति पा० । ६ ख्यापयन् स महादेवः इति, ख्यातवान् सुमहद्दोषमिति पा० । ७ आस्थाय विपुलं वेषमूनविंशतिवत्सरमिति, वेषं गूढमिति पा० ।

रम् ॥ लीलालसो महाबाहुः पीनांगश्चारुलोचनः ॥ ६ ॥ चामीकरवपुः श्रीमान्पूर्णचन्द्रनिभाननः ॥ मत्तमातंगगमनो दिग्वासा जगदीश्वरः ॥ ७ ॥ जातरूपमयीं मालां सर्व्वरत्नैरलङ्कृताम् ॥ दधानो भगवानीशः समागच्छति सस्मितः ॥ ८ ॥ योऽनन्तः पुरुषो योनिर्लोकानामव्ययो हरिः ॥ स्त्रीवेषं विष्णुरास्थाय सोऽनुगच्छति शोभम् ॥ ९ ॥ सम्पूर्णचन्द्रवदनं पीनोन्नतपयोधरम् ॥ शुचिस्मितं सुप्रसन्नं रणन्नूपुरकद्वयम् ॥ १० ॥ सुपीतवसनं दिव्यं श्यामलञ्चारुलोचनम् ॥ उदारहंसगमनं विलासि सुमनोहरम् ॥ ११ ॥ एवं स भगवानीशो देवदारुवनं हरः ॥ चचार हरिणा सार्द्धं मायया मोहयञ्जगत् ॥ १२ ॥ दृष्ट्वा चरन्तं विश्वेशं तत्र तत्र पिनाकिनम् ॥ मायया मोहिता नार्य्यो देवदेवं समन्वयुः ॥ १३ ॥ विस्रस्ताभरणाः सर्व्वास्त्यक्त्वा लज्जां पतिव्रताः ॥ सहैव तेन कामार्त्ता विलासिन्यश्चरन्ति हि ॥ १४ ॥ ऋषीणां पुत्रका ये स्युर्युवानो जितमानसाः ॥ अन्वागमन्हृषीकेशं सर्व्वे कामप्रपीडिताः ॥ १५ ॥ गायन्ति नृत्यन्ति विलासयुक्ता नारीगणा नायकमेकमीशम् ॥ दृष्ट्वा सपत्नीकमतीवकान्तमिष्टन्तथालिङ्गितमाचरन्ति ॥ १६ ॥ ते सन्निपत्य स्मितमाचरन्ति गायन्ति गीतानि मुनीशपुत्राः ॥ आलोक्य पद्मापतिमादिदेवं शुभांगमन्ये विचरन्ति तेन ॥ १७ ॥ आशामथैकामपि वासुदेवो मायी मुरारिर्मनसि प्रविष्टः ॥ करोति भोगान्मनसि प्रवृत्तिं मायानुभूयन्त इतीव सम्यक् ॥ १८ ॥ विभाति विश्वामरविश्वनाथैः समाधवस्त्रीगणसन्निविष्टः ॥ अशेषशक्त्या समयं निविष्टो यथैकशक्त्या सह देवदेवः ॥ १९ ॥ करोति नित्यं परमं प्रधानं तदा विरूढः पुनरेव भूयः ॥ ययौ समारुह्य हरिः स्वभावं तमीदृशं नाम तमादिदेवम् ॥ २० ॥ दृष्ट्वा नारीकुलं रुद्रं पुत्रानपि च केशवम् ॥ मोहयन्तं मुनिश्रेष्ठाः कोपं सन्दधिरे भृशम् ॥ २१ ॥ अतीवपरुषं वाक्यं प्रोचुर्देवं कपर्दिनम् ॥ शेपुश्च विविधैर्वाक्यैर्मायया तस्य मोहिताः ॥ २२ ॥ तपांसि तेषां सर्व्वेषां प्रत्याहन्यन्त शंकरे ॥ यथादित्यप्रकाशे तारका नभसि स्थिताः ॥ २३ ॥ तं भर्त्स्यं तापसा विप्राः समेत्य वृषभध्वजम् ॥ को भवानिति देवेशं पृच्छन्ति स्म विमोहिताः ॥ २४ ॥ सोऽब्रवीद्भगवानीशस्तपश्चर्तुमिहागतः ॥ इदानीं भार्य्ययादेशं भवद्भिरिह सुव्रताः ॥ २५ ॥ तस्य ते वाक्यमाकर्ण्य भृग्वाद्या मुनिपुङ्गवाः ॥ ऊचुर्गृहीत्वा वसनं त्यक्त्वा

---

१ कुशेशयमयीमिति पा० । २ दधार हंसचलनमिति पा० । ३ मोहितात्मानः इति पा० । ४ अन्वगच्छन् हृषीकेशमिति पा० । ५ यं गोपतिं नित्यविलासबाह्या इति पा० । ६ पार्श्वे निपेतुः स्मितमाचरन्तीति पा० । ७ करोति भावं मनसापि वृत्तिमिति पा० । ८ भूतभर्त्ता इति, विश्वात्मकभूतभर्त्ता इति पा० । ९ अशेषपंक्त्यासनसन्निविष्ट इति पा० । १० नृत्यं परमप्रभावमिति पा० । ११ तदीशवृत्तामृतमादिदेवः इति पा० । १२ अतीवासदृशं वाक्यं मोचुर्देवकपर्दिनमिति पा० । १३ पापैर्विविधैरिति, शापैर्विविधैरिति पा० । १४ भर्त्स्येति आर्षः प्रयोगः भर्त्सयित्वेति साधु ।

भार्य्यां तपश्चर ॥ २६ ॥ अथोवाच विहस्येशः पिनाकी नीललोहितः ॥ सम्प्रेक्ष्य जगतां योनिं पार्श्वस्थश्च जनार्दनम् ॥ २७ ॥ कथं भवद्भिरुदितं स्वभार्य्यापोषणोत्सुकैः ॥ त्यक्तव्या मम भार्य्येति धर्म्मज्ञैः शान्तमानसैः ॥ २८ ॥ ऋषय ऊचुः ॥ व्यभिचाररता भार्य्याः सन्त्याज्याः पतिनेरिताः ॥ अस्माभिर्भक्ताः सुभगा नेदृशास्त्यागमर्हति ॥ २९ ॥ महादेव उवाच ॥ न कदाचिदियं विप्रा मनसाप्यन्यमिच्छति ॥ नाहमेनामपि तथा विमुञ्चामि कदाचन ॥ ३० ॥ ऋषय ऊचुः ॥ दृष्ट्वा व्यभिचरन्तीह ह्यस्माभिः पुरुषाधम ॥ उक्तं ह्यसत्यं भवता गम्यताङ्क्षिप्रमेव हि ॥ ३१ ॥ एवमुक्ते महादेवः सत्यमेव मयेरितम् ॥ भवतां प्रतिभा ह्येषा त्यक्त्वासौ विचचार ह ॥ ३२ ॥ सोऽगच्छद्धरिणा सार्द्धं मुनीन्द्रस्य महात्मनः ॥ वसिष्ठस्याश्रमं पुण्यं भिक्षार्थी परमेश्वरः ॥ ३३ ॥ दृष्ट्वा समागतं देवं भिक्षमाणमरुन्धती ॥ वसिष्ठस्य प्रिया भक्त्या प्रत्युद्गम्य ननाम तम् ॥ ३४ ॥ प्रक्ष्याल्य पादौ विमलं दत्वा चासनमुत्तमम् ॥ सम्प्रेक्ष्य शिथिलं गात्रमभिघातहतं द्विजैः ॥ सन्धयामास भैषज्यैर्विषण्णवदना सती ॥ ३५ ॥ चकार महतीं पूजां प्रार्थयामास भार्य्यया ॥ को भवान्कुत आयातः किमाचारो भवानिति ॥ उच्यतामाह भगवान्सिद्धानाम्प्रवरो ह्यहम् ॥ ३६ ॥ यदेतन्मण्डलं शुभ्रं भाति ब्रह्ममयं सदा ॥ एषैव देवता मह्यं धारयामि सदैव तु ॥ ३७ ॥ इत्युक्त्वा प्रययौ श्रीमाननुगृह्य पतिव्रताम् ॥ ताडयाञ्चक्रिरे दण्डैर्लोष्टिभिर्मुष्टिभिर्द्विजाः ॥ ३८ ॥ दृष्ट्वा चरन्तं गिरिशं नग्नं विकृतिलक्षणम् ॥ प्रोचुरेतद्भवाल्लिंगमुत्पाटय सुदुर्मतेः ॥ ३९ ॥ तान् ब्रवीन्महायोगी करिष्यामीति शंकरः ॥ युष्माकं मामके लिंगे यदि द्वेषोऽभिजायते ॥ ४० ॥ उक्त्वा तूत्पाटयामास भगवान्भगनेत्रहा ॥ नापश्यंस्तत्क्षणादीशं केशवं लिंगमेव च ॥ ४१ ॥ तदोत्पाता बभूवुर्हि लोकानां भयशंसिनः ॥ न राजते सहस्रांशुश्चचाल पृथिवी पुनः ॥ निष्प्रभाश्च ग्रहाः सर्व्वे चुक्षुभे च महोदधिः ॥ ४२ ॥ अपश्यच्चानुसूयात्रेः स्वप्नं भार्य्या पतिव्रता ॥ कथयामास विप्राणां भयादाकुलितेन्द्रिया ॥ ४३ ॥ तेजसा भासयन्कृत्स्नं नारायणसहायवान् ॥ भिक्षमाणः शिवो नूनं दृष्टोऽस्माकं गृहेष्विति ॥ ४४ ॥ तस्या वचनमाकर्ण्य शङ्कमाना महर्षयः ॥ सर्व्वे जग्मुर्महायोगं ब्रह्माणं विश्वसम्भवम् ॥ ४५ ॥ उपास्यमानममलैर्योगिभिर्ब्रह्मवित्तमैः ॥ चतुर्वेदैर्मूर्त्तिमद्भिः सावित्र्या सहितं प्रभुम् ॥ ४६ ॥ आसीनमासने रम्ये नानाश्चर्य्यसमन्विते ॥ प्रभासहस्रकलिले ज्ञानैश्वर्य्यादिसंयुते ॥ ४७ ॥ बिभ्राजमानं वपुषा सस्मितं शुभ्रलोचनम् ॥ चतु

---

१ नास्माभिरेषा सुभगा तादृशी त्यागमर्हतीति पा० । २ भवतां मतिभाषेणात्युक्तोऽसौ विचचार ह इति पा० । ३ प्रोचुरेतद्भवाल्लिङ्गमुत्पाटयतु दुर्म्मतिरिति, सुदुर्म्मते इति पा० । ४ आकुलितेक्षणा इति पा० ।

मुखं महाबाहुं छन्दोमयमजं परम् ॥ ४८ ॥ विलोक्य देववपुषं प्रसन्नवदनं शुचिम् ॥ शिरोभिर्द्धरणीं गत्वा तोषयामासुरीश्वरम् ॥ ४९ ॥ तान्प्रसन्नमना देवश्चतुर्मूर्त्तिश्चतुर्मुखः ॥ व्याजहार मुनिश्रेष्ठाः किमागमनकारणम् ॥ ५० ॥ तत्तस्य वृत्तमखिलं ब्रह्मणः परमात्मनः ॥ ज्ञापयाञ्चक्रिरे सर्व्वे कृत्वा शिरसि चाञ्जलिम् ॥ ५१ ॥ ऋषय ऊचुः ॥ कश्चिद्दारुवनं पुण्यं पुरुषोऽतीवशोभनः ॥ भार्य्यया चारुसर्व्वाङ्ग्या प्रविष्टो नग्न एव हि ॥ ५२ ॥ मोहयामास वपुषा नारीणां कुलमीश्वरः ॥ कन्यकानां प्रियो यस्तु दूषयामास पुत्रकान् ॥ ५३ ॥ अस्माभिर्विविधाः शापाः प्रदत्तास्ते पराहताः ॥ ताडितोऽस्माभिरत्यर्थं लिंगन्तु विनिपातितम् ॥ ५४ ॥ अन्तर्हितश्च भगवान्सभार्यो लिंगमेव च ॥ उत्पाताश्चाभवन् घोराः सर्व्वभूतभयंकराः ॥ ५५ ॥ क एष पुरुषो देव भीताः स्मः पुरुषोत्तम ॥ भवन्तमेव शरणं प्रपन्ना वयमच्युत ॥ ५६ ॥ त्वं हि वेत्सि जगत्यस्मिन्यत्किञ्चिदिह चेष्टितम् ॥ अनुग्रहेण युक्तेन तदस्माननुपालय ॥ ५७ ॥ विज्ञापितो मुनिगणैर्विश्वात्मा कमलोद्भवः ॥ ध्यात्वा देवं त्रिशूलांकं कृताञ्जलिरभाषत ॥ ५८ ॥ ब्रह्मोवाच ॥ हा कष्टम्भवतामद्य जातं सर्व्वार्थनाशनम् ॥ धिग्बलं धिक् तपश्चर्य्या मिथ्यैव भवतामिह ॥ ५९ ॥ सम्प्राप्य पुण्यसंस्कारान्निधीनां परमं निधिम् ॥ उपेक्षितं वृथाचारैर्भवद्भिरिह मोहितैः ॥ ६० ॥ कांक्षन्ते योगिनो नित्यं यतन्तो यतयो निधिम् ॥ यमेव तं समासाद्य हा भवद्भिरुपेक्षितम् ॥ ६१ ॥ यजन्ति यज्ञैर्विविधैर्यत्प्राप्तैर्वेदवादिनः ॥ महानिधिं समासाद्य हा भवद्भिरुपेक्षितम् ॥ ६२ ॥ यमर्च्चयित्वा सततं विश्वेशत्वमिदं मम ॥ स देवोपेक्षितो दृष्ट्वा निधानम्भाग्यवर्ज्जिताः ॥ ६३ ॥ यस्मिन्समाहितं दिव्यमैश्वर्य्यं यत्तदव्ययम् ॥ तमासाद्य निधिं ब्रह्म हा भवद्भिर्वृथाकृतम् ॥ ६४ ॥ एष देवो महादेवो विज्ञेयस्तु महेश्वरः ॥ न तस्य परमं किञ्चित्पदं समभिगम्यते ॥ ६५ ॥ देवतानामृषीणां वा पितॄणाञ्चापि शाश्वतः ॥ सहस्रयुगपर्य्यन्ते प्रलये सर्व्वदेहिनाम् ॥ ६६ ॥ संहरत्येष भगवान्कालो भूत्वा महेश्वरः ॥ एष चैव प्रजाः सर्व्वाः सृजत्येष स्वतेजसा ॥ ६७ ॥ एष चक्री चक्रवर्त्ती श्रीवत्सकृतलक्षणः ॥ योगी कृतयुगे देवस्त्रेतायां यज्ञ एव च ॥ द्वापरे भगवान्कालो धर्म्मकेतुः कलौ युगे ॥ ६८ ॥ रुद्रस्य मूर्त्तयस्तिस्रो याभिर्विश्वमिदं ततम् ॥ तमो ह्यग्नी रजो ब्रह्मा सत्वं विष्णुरिति स्मृतिः ॥ ६९ ॥ मूर्त्तिरन्या स्मृता चास्य दिग्वासा च शिवा ध्रुवा ॥ यत्र तिष्ठति तद्ब्रह्म योगेन तु समन्वितम् ॥ ७० ॥ या

१ घाताः प्रवृत्ताश्चेति पा० । २ पुण्यसंस्थानां विधीनामिति पा० । ३ कांक्षन्तीति साधु । ४ यतमाना इति साधु । ५ ऐश्वर्य्यमखिलं ध्रुवमिति पा० । तमासाद्याक्षयं देवमिति पा० । ६ यं समासाद्य जानितमिति पा० ।

128

चास्य पार्श्वगा भार्य्या भवद्भिरभिभाषिता ॥ स हि नारायणो देवः परमात्मा सनातनः ॥ ७१ ॥ तस्मात्सर्व्वमिदं जातं तत्रैव च लयं व्रजेत् ॥ स एष मोचयेत्कृत्स्नं स एष च परा गतिः ॥ ७२ ॥ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ॥ एकशृंगो महानात्मा नारायण इति श्रुतिः ॥ ७३ ॥ रेतोऽस्य गर्भो भगवानापो माया तनुः प्रभुः ॥ स्तूयते विविधैर्मन्त्रैर्ब्राह्मणैर्मोक्षकांक्षिभिः ॥ ७४ ॥ संहृत्य सकलं विश्वं कल्पान्ते पुरुषोत्तमः ॥ शेते योगामृतं पीत्वा यत्र विष्णोः परम्पदम् ॥ ७५ ॥ न जायते न म्रियते वर्द्धते न च विश्वदृक् ॥ मूलप्रकृतिरव्यक्ता गीयते वैदिकैरजः ॥ ७६ ॥ ततो निशायां वृत्तायां सिसृक्षुरखिलं जगत् ॥ अजनाभौ तु तद्बीजं क्षिपत्येष महेश्वरः ॥ ७७ ॥ तं मां वित्त महात्मानं ब्रह्माणं विश्वतोमुखम् ॥ महान्तं पुरुषं विश्वमपां गर्भमनुत्तमम् ॥ ७८ ॥ न तं जानीत जनकं मोहितास्तस्य मायया ॥ देवदेवं महादेवं भूतानामीश्वरं हरम् ॥ ७९ ॥ एष देवो महादेवो ह्यनादिर्भगवान्हरः ॥ विष्णुना सह संयुक्तः करोति विकरोति च ॥ ८० ॥ न तस्य विद्यते कार्य्यं न तस्माद्विद्यते परम् ॥ स वेदान्प्र ददौ पूर्व्वं योगमायातनुर्मम ॥ ८१ ॥ स मायी मायया सर्वं करोति विकरोति च ॥ तमेव मुक्तये ज्ञात्वा व्रजध्वं शरणं शिवम् ॥ ८२ ॥ इतीरिता भगवता मरीचिप्रमुखा विभुम् ॥ प्रणम्य देवं ब्रह्माणं पृच्छन्ति स्म समाहिताः ॥ ८३ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

मुनय ऊचुः ॥ कथं पश्येम तं देवं पुनरेव पिनाकिनम् ॥ ब्रूहि विश्वामरेशान त्राता त्वं शरणैषिणाम् ॥ १ ॥ ब्रह्मोवाच ॥ यद्दृष्टं भवता तस्य लिङ्गं भुवि निपातितम् ॥ तल्लिङ्गानुकृतीशस्य कृत्वा लिंगमनुत्तमम् ॥ २ ॥ पूजयध्वं सपत्नीकाः सादरं पुत्रसंयुताः ॥ वैदिकैरेव नियमैर्विविधैर्ब्रह्मचारिणः ॥ ३ ॥ संस्थाप्य शांकरैर्म्मन्त्रैर्ऋग्यजुःसामसम्भवैः ॥ तपः परं समास्थाय गृणन्तः शतरुद्रियम् ॥ ४ ॥ समाहिताः पूजयध्वं सपुत्राः सह बन्धुभिः ॥ सर्व्वे प्राञ्जलयो भूत्वा शूलपाणिं प्रपद्यथ ॥ ५ ॥ ततो द्रक्ष्यथ देवेशं दुर्दर्शमकृतात्मभिः ॥ यं दृष्ट्वा सर्व्वमज्ञानमधर्म्मश्च प्रणश्यति ॥ ६ ॥ ततः प्रणम्य वरदं ब्रह्माणममितौजसम् ॥ जग्मुः संहृष्टमनसो देवदारुवनं पुनः ॥ ७ ॥ आराधयितुमारब्धा ब्रह्मणा कथितं यथा ॥ अजानन्तः परं भावं वीतरागा विमत्सराः ॥ ८ ॥ स्थण्डिलेषु विचित्रेषु पर्व्वतानां गुहासु च ॥ नदीनाञ्च विविक्तेषु पुलिनेषु शुभेषु च ॥ ९ ॥ शैवालभोजनाः केचित्केचिदन्तर्जलेशयाः ॥ केचिदभ्रावकाशास्तु पादांगुष्ठे ह्यधिष्ठिताः ॥ १० ॥

१ भवद्भिरभिवीक्षिता इति पा० । २ पुराणोऽष्टाक्षरो हरिरिति पा० । ३ तद्विष्णोः परमं पदमिति पा० । ४ व्रजेत शरणं भवमिति पा० । ५ सुदुःखिताः इति पा० । ६ लिङ्गन्तु विनिपातितमिति पा० । ७ शैवानां भाजनमिति पा० । ८ केचिद्दर्भावकाशास्तु इति पा० ।

दन्तोऽलूखलिनस्त्वन्ये ह्यश्मकुट्टास्तथा परे ॥ शाकपर्णाशना[1]: केचित्सम्प्रक्षाला मरीचिपाः ॥ ११ ॥ वृक्षमूलनिकेताश्च शिलाशय्यास्तथापरं ॥
कालं नयन्ति तपसा पूजयन्तो महेश्वरम् ॥ १२ ॥ ततस्तेषां प्रसादार्थं प्रपन्नार्तिहरो हरः ॥ चकार भगवान्बुद्धिं बोधयन्वृषभध्वजः[2] ॥ १३ ॥
देवः कृतयुगे ह्यस्मिन्छृंगे हिमवतः शुभे[3] ॥ देवदारुवनम्प्राप्तः प्रसन्नः परमेश्वरः ॥ १४ ॥ भस्मपाण्डुरदिग्धांगो नग्नो विकृतलक्षणः ॥ उल्मु
कव्यग्रहस्तश्च रक्तपिंगललोचनः ॥ १५ ॥ क्वचिच्च हसते रौद्रं क्वचिद्गायति विस्मितः ॥ क्वचिन्नृत्यति शृङ्गारी क्वचिद्रौति मुहुर्मुहुः ॥ १६ ॥
आश्रमे ह्यटते भिक्षुर्याचते च पुनः पुनः ॥ मायां कृत्वात्मनो रूपन्देवस्तद्वनमागतः ॥ १७ ॥ कृत्वा गिरिसुतां गौरीं पार्श्वे देवः पिनाकधृक्
सा च पूर्व्ववद्देवेशी देवदारुवनं गता ॥ १८ ॥ दृष्ट्वा समागतं देवं देव्या सह कपर्दिनम् ॥ प्रणेमुः शिरसा भूमौ तोषयामासुरीश्वरम् ॥ १९ ॥
वैदिकैर्विविधैर्मन्त्रैस्स्तोत्रैर्माहेश्वरैः शुभैः ॥ अथर्वशिरसा चान्ये रुद्राद्यैरर्चयन्भवम् ॥ २० ॥ नमो देवाधिदेवाय महादेवाय ते नमः ॥ त्र्य
म्बकाय नमस्तुभ्यं त्रिशूलवरधारिणे ॥ २१ ॥ नमो दिग्वाससे तुभ्यं विकृताय पिनाकिने ॥ सर्व्वप्रणतदेवाय स्वयमप्रणतात्मने ॥ २२ ॥
अन्तकान्तकृते तुभ्यं सर्व्वसंहरणाय च ॥ नमोऽस्तु नृत्यशीलाय नमो भैरवरूपिणे ॥ २३ ॥ नरनारीशरीराय योगिनां गुरवे नमः ॥ नमो
दान्ताय शान्ताय तापसाय हराय च ॥ २४ ॥ विभीषणाय रुद्राय नमस्ते कृत्तिवाससे ॥ नमस्ते लेलिहानाय श्रीकण्ठाय च ते नमः ॥ २५ ॥
अघोरघोररूपाय वामदेवाय वै नमः ॥ नमः कनकमालाय देव्याः प्रियकराय च ॥ २६ ॥ गङ्गासलिलधाराय शम्भवे परमेष्ठिने ॥ नमो योगा
धिपतये भूताधिपतये[4] नमः ॥ २७ ॥ प्राणाय च नमस्तुभ्यं नमो भस्मांगधारिणे ॥ नमस्ते हव्यवाहाय दंष्ट्रिणे हव्यरेतसे ॥ २८ ॥ ब्रह्मणश्च
शिरोहर्त्रे नमस्ते कालरूपिणे ॥ आगतिं ते न जानीमो गतिं नैव च नैव च ॥ २९ ॥ विश्वेश्वर महादेव योऽसि सोऽसि नमोस्तु ते[5] ॥ नमः प्रमथना
थाय दात्रे च शुभसम्पदाम् ॥ ३० ॥ कपालपाणये तुभ्यं नमो जुष्टतमाय ते ॥ नमः कनकपिङ्गाय वारिलिंगाय ते नमः ॥ ३१ ॥ नमो
वह्न्यर्कलिंगाय ज्ञानलिंगाय ते नमः ॥ नमो भुजंगहाराय कर्णिकारप्रियाय च ॥ किरीटिने कुण्डलिने कालकालाय ते नमः ॥ ३२ ॥ महा

---

१ शाकपत्राशिन इति पा० । २ प्रबोधाय वृषध्वजः इति, बोधयंस्तान् वृषध्वज इति पा० । ३ भृगोर्हिमवतः सुतेति पा० । ४ ब्रह्माधिपतये इति पा० । ५ विश्वेश्वर महादेव योगिकोऽसि नमोऽस्तु ते इति पा० ।

देव महादेव देवदेव त्रिलोचन ॥ क्षम्यतां यत्कृतं मोहात्त्वमेव शरणं हि नः ॥ ३३ ॥ चरितानि विचित्राणि गुह्यानि गहनानि च ॥ ब्रह्मादीनाञ्च सर्व्वेषां दुर्विज्ञेयो हि शंकरः ॥ ३४ ॥ अज्ञानाद्यदि वाज्ञानात्किञ्चिद्यत्कुरुते नरः ॥ तत्सर्व्वं भगवानेव कुरुते योगमायया ॥ ३५ ॥ एवं स्तुत्वा महादेवं प्रविष्टैरन्तरात्मभिः ॥ ऊचुः प्रणम्य गिरिशं पश्यामस्त्वां यथा पुरा ॥ ३६ ॥ तेषां संस्तवमाकर्ण्य सोमः सोमविभूषणः ॥ स्वयमेव परं रूपं दर्शयामास शंकरः ॥ ३७ ॥ तं ते दृष्ट्वाथ गिरिशं देव्या सह पिनाकिनम् ॥ यथापूर्व्वं स्थिता विप्राः प्रणेमुर्हृष्टमानसाः ॥३८॥ ततस्ते मुनयः सर्व्वे संस्तूय च महेश्वरम् ॥ भृग्वंगिराः वसिष्ठस्तु विश्वामित्रस्तथैव च ॥ ३९ ॥ गौतमोऽत्रिः सुकेशश्च पुलस्त्यः पुलहः क्रतुः ॥ मरीचिः कश्यपश्चापि संवर्त्तकमहातपाः ॥ प्रणम्य देवदेवेशमिदं वचनमब्रुवन् ॥ ४० ॥ कथं त्वान्देवदेवेश कर्म्मयोगेन वा प्रभो ॥ ज्ञानेन वाथ योगेन पूजयामः सदैव हि ॥ ४१ ॥ केन वा देवमार्गेण सम्पूज्यो भगवानिह ॥ किं तत्सेव्यमसेव्यं वा सर्व्वमेतद्ब्रवीहि नः ॥ ४२ ॥ श्रीशिव उवाच ॥ एतद्वः सम्प्रवक्ष्यामि गूढं गहनमुत्तमम् ॥ ब्रह्मणा कथितं पूर्व्वं महादेवे महर्षयः ॥ ४३ ॥ सांख्ययोगाद्विधा ज्ञेयं पुरुषाणां हि साधनम् ॥ योगेन सहितं सांख्यं पुरुषाणां विमुक्तिदम् ॥ ४४ ॥ न केवलं हि योगेन दृश्यते पुरुषः परः ॥ ज्ञानन्तु केवलं सम्यगपवर्गफलप्रदम् ॥ ४५ ॥ भवन्तः केवलं योगं समाश्रित्य विमुक्तये ॥ विहाय सांख्यं विमलमकुर्व्वत परिश्रमम् ॥ ४६ ॥ एतस्मात्कारणाद्विप्रा नृणां केवलकर्म्मणाम् ॥ आगतोऽहमिमं देशं ज्ञापयन्मोहसम्भवम् ॥ ४७ ॥ तस्माद्भवद्भिर्विमलं ज्ञानं कैवल्यसाधनम् ॥ ज्ञातव्यं हि प्रयत्नेन श्रोतव्यं दृश्यमेव च ॥ ४८ ॥ एकः सर्व्वत्रगो ह्यात्मा केवलश्चितिमात्रकः ॥ आनन्दो निर्म्मलो नित्य एतद्वै सांख्यदर्शनम् ॥ ४९ ॥ एतदेव परं ज्ञानमथ मोक्षोऽनुगीयते ॥ एतत्कैवल्यममलं ब्रह्मभावश्च वर्णितः ॥ ५० ॥ आश्रित्य चैतत्परमं तन्निष्ठास्तत्परायणाः ॥ पश्यन्ति मां महात्मानो यतयो विश्वमीश्वरम् ॥ ५१ ॥ एतत्तत्परमं ज्ञानं केवलं सन्निरञ्जनम् ॥ अहं हि वेद्यो भगवान्मम मूर्त्तिरियं शिवा ॥ ५२ ॥ बहूनि साधनानीह सिद्धये कथितानि तु ॥ तेषामभ्यधिकं ज्ञानं मामकं द्विजपुङ्गवाः ॥ ५३ ॥ ज्ञानयोगरताः शान्ता मामेव शरणं गताः ॥ ये हि मां भस्मनि रता ध्यायन्ति सततं हृदि ॥५४॥

---

१ नमो देव महादेव महादेव त्रिलोचन इति पा० । २ संस्तवं सम्यक् स्तवमित्यर्थः । अत्र संस्तवशब्दः न परिचयार्थकः । ३ भृग्वाङ्गिराः—भृगुणा सहितः अङ्गिराः । ४ केवलंनेति, न केवलं वियोगेनेति पा० । ५ केवलधर्म्मिणामिति पा० । ६ ब्रह्मभावं स्तुवन्त्यत इति पा० ।

मद्भक्तितत्परा नित्यं यतयः क्षीणकल्मषाः ॥ नाशयाम्यचिरात्तेषां घोरं संसारगह्वरम् ॥ ५५ ॥ निर्म्मितं हि मया पूर्व्वं व्रतं पाशुपतं शुभम् ॥ गुह्याद्गुह्यतमं सूक्ष्मं वेदसारं विमुक्तये ॥ ५६ ॥ प्रशान्तः संयतमना भस्मोद्धूलितविग्रहः ॥ ब्रह्मचर्य्यरतो नग्नो व्रतं पाशुपतञ्चरेत् ॥ ५७ ॥ यद्वा कौपीनवसनः स्यादेकवसनो मुनिः ॥ वेदाभ्यासरतो विद्वान्ध्यायेत्पशुपतिं शिवम् ॥ ५८ ॥ एष पाशुपतो योगः सेवनीयो मुमुक्षुभिः ॥ तस्मिन्स्थितैस्तु पठितं निष्कामैरिति हि श्रुतम् ॥ ५९ ॥ वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥ बहवोऽनेन योगेन पूता मद्भावमागताः ॥ ६० ॥ अन्यानि चैव शास्त्राणि लोकेऽस्मिन्मोहनानि तु ॥ वेदवादविरुद्धानि मयैव कथितानि तु ॥ ६१ ॥ वामं पाशुपतं सोमं लाकुरञ्चैव भैरवम् ॥ असेव्यमेतत्कथितं वेदबाह्यं तथेतरम् ॥ ६२ ॥ वेदमूर्त्तिरहं विप्रा नान्यशास्त्रार्थवेदिभिः ॥ ज्ञायते मत्स्वरूपन्तु मुक्त्वा देवं सनातनम् ॥ ६३ ॥ स्थापयध्वमिदं मार्गं पूजयध्वं महेश्वरम् ॥ ततोऽचिराद्वरं ज्ञानमुत्पत्स्यति न संशयः ॥ ६४ ॥ मयि भक्तिश्च विपुला भवतामस्तु सत्तमाः ॥ ध्यानमात्रे हि सान्निध्यं दास्यामि मुनिसत्तमाः ॥ ६५ ॥ इत्युक्त्वा भगवान्सोमस्तत्रैवान्तर्हितोऽभवत् ॥ तेऽपि दारुवने स्थित्वा ह्यर्चयन्ति स्म शङ्करम् ॥ ६६ ॥ ब्रह्मचर्य्यरताः शान्ता ज्ञानयोगपरायणाः ॥ समेत्य ते महात्मानो मुनयो ब्रह्मवादिनः ॥ ६७ ॥ विचक्रिरे बहून्वादान्स्वात्मज्ञानसमाश्रयान् ॥ किमस्य जगतो मूलमात्मा चास्माकमेव हि ॥ ६८ ॥ कोऽपि स्यात्सर्व्वभावानां हेतुरीश्वर एव च ॥ इत्येवं मन्यमानानां ध्यानमार्गावलम्बिनाम् ॥ आविरासीन्महादेवी ततो गिरिवरात्मजा ॥ ६९ ॥ कोटिसूर्य्यप्रतीकाशा ज्वालामालासमावृता ॥ स्वभाभिर्निर्म्मलाभिः सा पूरयन्ती नभस्तलम् ॥ ७० ॥ तामन्वपश्यद्गिरिजाममेयां ज्वालासहस्रान्तरसन्निविष्टाम् ॥ प्रणेमुरेतामखिलेशपत्नीं जानन्ति चैतत्परमस्य बीजम् ॥ ७१ ॥ अस्माकमेषा परमस्य पत्नी गतिस्तथात्मा गगनाभिधाना ॥ पश्यन्त्यथात्मानमिदञ्च कृत्स्नं तस्यामथैते मुनयः प्रहृष्टाः ॥ ७२ ॥ निरीक्षितास्ते परमेशपत्न्या तदन्तरे देवमशेषहेतुम् ॥ पश्यन्ति शम्भुं कविमीशितारं रुद्रं बृहन्तं पुरुषं पुराणम् ॥ ७३ ॥ आलोक्य देवीमथ देवमीशं प्रणेमुरानन्दमवापुरग्र्यम् ॥ ज्ञानं तदीशं भगवत्प्रसादादाविर्बभौ जन्मविनाशहेतु ॥ ७४ ॥ इयं या सा जगतो योनिरेका सर्व्वात्मिका सर्व्वनियामिका च ॥ माहेश्वरी शक्तिरनादिसिद्धा व्योमाभिधाना दिवि राजतीव ॥ ७५ ॥

१ मद्भक्तिपरमा इति पा० । २ संसारसागरमिति पा० । ३ यत्नात्पाशुपतं परमिति पा० । ४ स्याद्वा दिग्वसनो मुनिरिति पा० । ५ भस्मच्छन्नैर्हि सततमिति पा० । ६ उत्पत्स्यते इति साधु । ७ तत्रैवान्तरधीयत इति पा० । ८ मुनयश्च विमा इति पा० ।

अस्यां महान्परमेष्ठी परस्तान्महेश्वरः शिव एकः स रुद्रः ॥ चकार विश्वं परशक्तिनिष्ठं मायामथारुह्य च देवदेवः ॥ ७६ ॥ एको देवः सर्व्वभूतेषु गूढो मायी रुद्रः सकलो निष्कलश्च ॥ स एव देवी न च तद्विभिन्नमेतज्ज्ञात्वा ह्यमृतत्वं व्रजन्ति ॥ ७७ ॥ अन्तर्हितोऽभूद्भगवान्महेशो देव्या तया सह देवाधिदेवः ॥ आराधयन्ति स्म तमादिदेवं वनौकसस्ते पुनरेव रुद्रम् ॥७८॥ एतद्वः कथितं सर्व्वं देवदेवस्य चेष्टितम् ॥ देवदारुवने पूर्व्वं पुराणे यन्मया श्रुतम् ॥ ७९ ॥ यः पठेच्छृणुयान्नित्यं मुच्यते सर्व्वपातकैः ॥ श्रावयेद्वा द्विजाञ्छान्तान्स याति परमां गतिम्[1] ॥ ८० ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे देवदारुवनप्रवेशो नाम ऊनचत्वारिंशोऽध्यायः ॥३९॥ सूत उवाच ॥ एषा पुण्यतमा देवी देवगन्धर्व्वसेविता ॥ नर्म्मदालोकविख्याता तीर्थानामुत्तमा नदी ॥ १ ॥ तस्याः शृणुध्वं माहात्म्यं मार्कण्डेयेन भाषितम् ॥ युधिष्ठिराय तु शुभं सर्व्वपापप्रणाशनम् ॥ २ ॥ युधिष्ठिर उवाच ॥ श्रुतास्ते विविधा धर्म्मास्तत्प्रसादान्महामुने ॥ माहात्म्यञ्च प्रयागस्य तीर्थानि विविधानि[2] च ॥३॥ नर्म्मदा सर्व्वतीर्थानां मुख्या हि भवतेरिता ॥ तस्यास्त्विदानीं माहात्म्यं वक्तुमर्हसि सत्तम ॥४॥ मार्कण्डेय उवाच ॥ नर्म्मदा सरितां श्रेष्ठा रुद्रदेहाद्विनिःसृता॥तारयेत्सर्व्वभूतानि स्थावराणि चराणि च ॥५॥ नर्म्मदायास्तु माहात्म्यं पुराणे यन्मया श्रुतम् ॥ इदानीं तत्प्रवक्ष्यामि शृणुष्वैकमनाः[3] शुभम् ॥६॥ पुण्या कनखले गङ्गा कुरुक्षेत्रे सरस्वती ॥ ग्रामे वा यदि वारण्ये पुण्या सर्व्वत्र नर्म्मदा ॥ ७ ॥ त्रिभिः सारस्वन्तोयं सप्ताहाद्यामुनं जलम्[4] ॥ सद्यः पुनाति गांगेयं दर्शनादेव नार्मदम् ॥ ८ ॥ कलिंगदेशपश्चार्द्धे पर्व्वतेऽमरकण्टके ॥ पुण्या त्रिषु त्रिलोकेषु[5] रमणीया मनोरमा ॥ ९ ॥ सदेवासुरगन्धर्व्वा ऋषयश्च तपोधनाः ॥ तपस्तप्त्वा तु राजेन्द्र सिद्धिन्तु परमां गताः ॥ १० ॥ तत्र स्नात्वा नरो राजन्नियमस्थो जितेन्द्रियः ॥ उपोष्य रजनीमेकां कुलानां तारयेच्छतम् ॥ ११ ॥ योजनानां शतं साग्रं श्रूयते सरिदुत्तमा ॥ विस्तारेण तु राजेन्द्र योजनद्वयमायता ॥ १२ ॥ षष्टितीर्थसहस्राणि षष्टिकोट्यस्तथैव च ॥ पर्व्वतस्य समन्तात्तु तिष्ठन्त्यमरकण्टके ॥ १३ ॥ ब्रह्मचारी शुचिर्भूत्वा जितक्रोधो जितेन्द्रियः ॥ सर्व्वहिंसानिवृत्तस्तु सर्व्वभूतहिते रतः ॥१४॥ एवं शुद्धसमाचारो यस्तु प्राणान्परित्यजेत् ॥ तस्य पुण्यफलं राजञ्छृणुष्वावहितोऽनघ ॥ १५ ॥ शतं वर्षसहस्राणि स्वर्गे मोदंति[6] पाण्डव ॥ अप्सरोगणसंकीर्णो

---

१ श्रावयित्वा द्विजान् भक्तान् प्रयाति परमां गतिमिति पा० । २ स्थापनानि च नर्म्मदेति पा० । ३ शृणु इति साधु । ४ सप्ताहेन तु यामुनमिति पा० । ५ पुण्याशु त्रिषु लोकेष्विति, पुण्या च त्रिषु लोकेषु इति पा० । ६ मोदते इति साधु ।

दिव्यस्त्रीपरिवारितः ॥ १६ ॥ दिव्यगन्धानुलितश्च दिव्यपुष्पोपशोभितः ॥ क्रीडते दिव्यलोके तु विबुधैः सह मोदते ॥ १७ ॥ ततः स्वर्गात्परिभ्रष्टो राजा भवति धार्म्मिकः ॥ गृहन्तु लभतेऽसौ वै नानारत्नसमन्वितम् ॥ १८ ॥ स्तम्भैर्मणिमयैर्दिव्यैर्वज्रवैदूर्यभूषितम् ॥ आलेख्यवाहनैः शुभ्रैर्दासीशतसमन्वितम् ॥ १९ ॥ राजराजेश्वरः श्रीमान्सर्वस्त्रीजनवल्लभः ॥ जीवेद्वर्षशतं साग्रन्तत्र भोगसमन्वितः ॥ २० ॥ अग्निप्रवेशेऽथ जले वाथवानशने कृते ॥ अनिवर्त्तिका गतिस्तस्य पवनस्याम्बरे यथा ॥ २१ ॥ पश्चिमे पर्व्वततटे सर्व्वपापविनाशनः ॥ ह्रदो जलेश्वरो नाम त्रिषु लोकेषु विश्रुतः ॥ २२ ॥ तत्र पिण्डप्रदानेन सन्ध्योपासनकर्म्मणा ॥ दशवर्षसहस्राणि तर्पिताः स्युर्न संशयः ॥ २३ ॥ दक्षिणे नर्म्मदाकूले कपिलाख्या महानदी ॥ सरसार्जुनसञ्छन्ना नातिदूरे व्यवस्थिता ॥ २४ ॥ सा तु पुण्या महाभागा त्रिषु लोकेषु विश्रुता ॥ तत्र कोटिशतं साग्रं तीर्थानान्तु युधिष्ठिर॥२५॥तस्मिंस्तीर्थे तु ये वृक्षाः पतिताः कालपर्य्ययात्॥नर्म्मदातोयसंस्पृष्टास्ते यान्ति परमाङ्गतिम् ॥२६॥ द्वितीया तु महाभाग विशल्यकरणी शुभा ॥ तत्र तीर्थे नरः स्नात्वा विशल्यो भवति क्षणात् ॥ २७ ॥ कपिला च विशल्या च श्रूयेते सरिदुत्तमे ॥ ईश्वरेण पुरा प्रोक्ते लोकानां हितकाम्यया ॥ २८ ॥ अनाशकन्तु यः कुर्य्यात्तस्मिंस्तीर्थे नराधिप ॥ सर्व्वपापविशुद्धात्मा रुद्रलोके स गच्छति ॥ २९ ॥ तत्र स्नात्वा नरो राजन्नश्वमेधफलं लभेत् ॥ ये वसन्त्युत्तरे कूले रुद्रलोके वसन्ति ते ॥ ३० ॥ सरस्वत्याञ्च गंगायां नर्म्मदायां युधिष्ठिर ॥ समं स्नानञ्च दानञ्च यथा मे शंकरोऽब्रवीत् ॥ ३१ ॥ परित्यजति यः प्राणान्पर्व्वतेऽमरकण्टके ॥ वर्षकोटिशतं साग्रं रुद्रलोके महीयते ॥ ३२ ॥ नर्म्मदायां जलं पुण्यं फेनोर्मिसफलीकृतम् ॥ पवित्रं शिरसा धृत्वा सर्व्वपापैः प्रमुच्यते ॥ ३३ ॥ नर्म्मदा सर्व्वतः पुण्या ब्रह्महत्यापहारिणी ॥ अहोरात्रोपवासेन मुच्यते ब्रह्महत्यया ॥ ३४ ॥ जालेश्वरं तीर्थवरं सर्व्वपापप्रणाशनम् ॥ तत्र गत्वा नियमवान्सर्व्वकामांल्लभेन्नरः ॥ ३५ ॥ चन्द्रसूर्य्योपरागे च गत्वा ह्यमरकण्टकम् ॥ अश्वमेधाद्दशगुणं पुण्यमाप्नोति मानवः ॥ ३६ ॥ एष पुण्यो गिरिवरो देवगन्धर्व्वसेवितः ॥ नानाद्रुमलताकीर्णो नानापुष्पोपशोभितः ॥ ३७ ॥ तत्र सन्निहितो राजन्देव्या सह महेश्वरः ॥ ब्रह्मा विष्णुस्तथा रुद्रो विद्याधरगणैः

---

१ देवलोके तु दैवतैरिति पा० । २ दासीदाससमन्वितमिति पा० । ३ अथ वह्निप्रवेशे तु कुले वानाशके कृते इति पा० । आशो भोजनमेव आशाकः, न आशाकः अनाशकस्तस्मिन् मायोपवेशने-इत्यर्थः । ४ अनिवर्त्तिका अपुनरावर्त्तिनीत्यर्थः । ५ राजसत्तमेति पा० । ६ समलं कृतमिति, बहुलंकृतमिति पा० ।

सह ॥ ३८ ॥ प्रदक्षिणन्तु यः कुर्य्यात्पर्व्वतेऽमरकण्टके ॥ पौण्डरीकस्य यज्ञस्य फलम्प्राप्नोति मानवः ॥ ३९ ॥ कावेरी नाम विख्याता नदी कल्मषनाशिनी ॥ तत्र स्नात्वा महादेवमर्च्चयेद्वृषभध्वजम् ॥ संगमे नर्म्मदायास्तु रुद्रलोके महीयते ॥ ४० ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे मार्कण्डेययुधिष्ठिरसंवादे नर्म्मदामाहात्म्यं नाम चत्वारिंशोऽध्यायः ॥ ४० ॥ मार्कण्डेय उवाच ॥ नर्म्मदा सरितां श्रेष्ठा सर्व्वपापविनाशिनी ॥ मुनिभिः कथिता पूर्व्वमीश्वरेण स्वयम्भुना ॥ १ ॥ मुनिभिः संस्तुता ह्येषा नर्म्मदा प्रवरा नदी ॥ रुद्रगात्राद्विनिष्क्रान्ता लोकानां हितकाम्यया ॥ २ ॥ सर्व्वपापहरा नित्यं सर्व्वदेवनमस्कृता ॥ संस्तुता देवगन्धर्व्वैरप्सरोभिस्तथैव च ॥ ३ ॥ उत्तरे चैव कूले च तीर्थं त्रैलोक्यविश्रुते ॥ नाम्ना भद्रेश्वरं पुण्यं सर्व्वपापहरं शुभम् ॥ ४ ॥ तत्र स्नात्वा नरो राजन्दैवतैः सह मोदते ॥ ततो गच्छेत राजेन्द्र विमलेश्वरमुत्तमम् ॥ ५ ॥ तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत ॥ ततोऽङ्गारकेश्वरं गच्छेन्नियतो नियताशनः ॥ ६ ॥ सर्व्वपापविशुद्धात्मा रुद्रलोके महीयते ॥ ततो गच्छेत राजेन्द्र केदारं नाम पुण्यदम् ॥ ७ ॥ तत्र स्नात्वोदकं पीत्वा सर्व्वान्कामानवाप्नुयात ॥ निष्फलेशन्ततो गच्छेत्सर्व्वपापविनाशनम् ॥ ८ ॥ तत्र स्नात्वा महाराज रुद्रलोके महीयते ॥ ततो गच्छेत राजेन्द्र बाणतीर्थमनुत्तमम् ॥ ९ ॥ तत्र प्राणान्परित्यज्य रुद्रलोकमवाप्नुयात् ॥ ततः पुष्करिणीं गच्छेत्स्नानं तत्र समाचरेत् ॥ १० ॥ तत्र स्नात्वा नरो राजन्सिंहासनपतिर्भवेत् ॥ शक्रतीर्थं ततो गच्छेत्कूले चैव तु दक्षिणे ॥ ११ ॥ स्नातमात्रो नरस्तत्र इन्द्रस्यार्द्धासनं लभेत् ॥ ततो गच्छेत राजेन्द्र शूलभेद इति श्रुतिः ॥ १२ ॥ तत्र स्नात्वा च पीत्वा च गोसहस्रफलं लभेत् ॥ उपोष्य रजनीमेकां स्नानं कृत्वा यथाविधि ॥ १३ ॥ आराधयेन्महायोगं देवं देवं नरोऽमलः ॥ गोसहस्रफलम्प्राप्य विष्णुलोकं स गच्छति ॥ १४ ॥ ऋषितीर्थं ततो गत्वा सर्व्वपापहरं नृणाम् ॥ स्नातमात्रो नरस्तत्र शिवलोके महीयते ॥ १५ ॥ नारदस्य तु तत्रैव तीर्थं परमशोभनम् ॥ स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥ १६ ॥ यत्र तप्तन्तपः पूर्व्वं नारदेन सुरर्षिणा ॥ प्रीतस्तस्य ददौ योगं देवदेवो महेश्वरः ॥ १७ ॥ ब्रह्मणा निर्म्मितं लिंगं ब्रह्मेश्वरमिति श्रुतम् ॥

१ नागश्चामरकङ्कटमिति पा० । २ विपुलेति पा० । ३ रुद्रलोके महीयते इति पा० । ४ तीर्थमाम्रातकेश्वरमिति पा० । ५ तत्र स्नात्वार्चयेद्देवं गोसहस्रफलं लभेदिति पा० । ६ देवं नारायणं हरिमिति पा० ।

यत्र स्नात्वा नरो राजन्ब्रह्मलोके महीयते ॥ १८ ॥ ऋणतीर्थं ततो गच्छेदृणान्मुच्येन्नरो ध्रुवम् ॥ वटेश्वरं ततो गच्छेत्पर्य्याप्तं जन्मनः फलम् ॥ १९ ॥ भीमेश्वरं ततो गच्छेत्सर्व्वव्याधिविनाशनम् ॥ स्नातमात्रो नरस्तत्र सर्व्वदुःखैः प्रमुच्यते ॥२०॥ ततो गच्छेत राजेन्द्र पिंगलेश्वरमुत्तमम् ॥ अहोरात्रोपवासेन त्रिरात्रफलमाप्नुयात् ॥२१॥ तस्मिंस्तीर्थे तु राजेन्द्र कपिलां यः प्रयच्छति ॥ यावन्ति तस्या रोमाणि तत्प्रसूतिकुलेषु च ॥ २२ ॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ यस्तु प्राणपरित्यागं कुर्य्यात्तत्र नराधिप ॥२३॥ अक्षयं मोदते कालं यावच्चन्द्रदिवाकरौ ॥ नर्मदातटमाश्रित्य ये च तिष्ठन्ति मानवाः ॥ २४ ॥ ते मृताः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ततो दीप्तेश्वरं गच्छेद्व्यासतीर्थं तपोवनम् ॥ २५ ॥ निवर्त्तिता पुरा तत्र व्यासभीता महानदी ॥ हुंकारिता तु व्यासेन तत्क्षणेन ततो गता ॥ २६ ॥ प्रदक्षिणन्तु यः कुर्य्यात्तस्मिंस्तीर्थे युधिष्ठिर ॥ प्रीतस्तत्र भवेद्व्यासो वाञ्छितं लभते फलम् ॥ २७ ॥ ततो गच्छेत राजेन्द्र इक्षुनद्यास्तु संगमम् ॥ त्रैलोक्यविश्रुतं पुण्यं तत्र सन्निहितः शिवः ॥ २८ ॥ तत्र स्नात्वा नरो राजन् गाणपत्यमवाप्नुयात् ॥ ऋणतीर्थं ततो गच्छेत्स ऋणान्मुच्यते ध्रुवम् ॥ २९ ॥ आजन्मनः कृतं पापं स्नातस्तत्र व्यपोहति ॥ तत्र देवाः सगन्धर्व्वा भर्गात्मजमनुत्तमम् ॥ ३० ॥ उपासते महात्मानं स्कन्दं शक्तिधरं प्रभुम् ॥ ततो गच्छेदांगिरसं स्नानं तत्र समाचरेत् ॥ ३१ ॥ गोसहस्रफलम्प्राप्य रुद्रलोकं स गच्छति ॥ अङ्गिरा यत्र देवेशं ब्रह्मपुत्रो वृषध्वजम् ॥ ३२ ॥ तपसाराध्य विश्वेशं लब्धवान्योगमुत्तमम् ॥ कुशतीर्थं ततो गच्छेत्सर्व्वपापप्रणाशनम् ॥ ३३ ॥ तत्र स्नानं प्रकुर्व्वीत अश्वमेधफलं लभेत् ॥ कोटितीर्थं ततो गच्छेत्सर्व्वपापप्रणाशनम् ॥ ३४ ॥ आजन्मनः कृतं पापं स्नातस्तत्र व्यपोहति ॥ चन्द्रभागां ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ३५ ॥ स्नातमात्रो नरस्तत्र सोमलोके महीयते ॥ नर्म्मदादक्षिणे कूले सङ्गमेश्वरमुत्तमम् ॥ ३६ ॥ तत्र स्नात्वा नरो राजन्सर्व्वयज्ञफलं लभेत् ॥ नर्म्मदाया उदक्कूले तीर्थं परमशोभनम् ॥ ३७ ॥ आदित्यायतनं रम्यमीश्वरेण तु भाषितम् ॥ तत्र स्नात्वा तु राजेन्द्र दत्त्वा दानन्तु शक्तितः ॥ ३८ ॥ तस्य तीर्थप्रभावेण लभते चाक्षयम्फलम् ॥ दरिद्रा व्याधिता ये तु ये तु दुष्कृतकर्म्मिणः ॥ ३९ ॥ मुच्यन्ते सर्व्वपापेभ्यः सूर्य्यलोकं प्रयान्ति च ॥ मातृतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ ४० ॥ स्नातमात्रो नरस्तत्र स्वर्गलोकमवाप्नुयात् ॥ ततः पश्चिमतो गच्छेन्मरुताशयमुत्तमम् ॥ ४१ ॥ तत्र स्नात्वा तु

---

१ ततो गच्छेत राजेन्द्र संप्राप्तमिति पा० । २ दक्षिणेनेति पा० । ३ रुद्रलोके महीयते इति पा० । ४ तत्र स्नात्वा नरो राज्यं लभते नात्र संशय इति, लभेत् पुण्यं स चोत्तममिति पा० । ५ मरुदालयमिति पा० ।

राजेन्द्र शुचिर्भूत्वा समाहितः ॥ काञ्चनञ्च यतेर्दद्याद्यथाविभवविस्तरम् ॥ ४२ ॥ पुष्पकेण विमानेन वायुलोकं स गच्छति ॥ ततो गच्छेत्तु राजेन्द्र अहल्यातीर्थमुत्तमम् ॥ स्नानमात्रादप्सरोभिर्मोदते कालमुत्तमम् ॥ ४३ ॥ चैत्रमासे तु सम्प्राप्ते शुक्लपक्षे त्रयोदशी ॥ कामदेवदिने तस्मिन्नह ल्यां पूजयेत्ततः ॥ ४४ ॥ यत्र तत्र समुत्पन्नो नरोऽत्यर्थप्रियो भवेत् ॥ स्त्रीवल्लभो भवेच्छ्रीमान्कामदेव इवापरः ॥ ४५ ॥ सरिद्वरां समासाद्य तीर्थं शक्रस्य विश्रुतम् ॥ स्नातमात्रो नरस्तत्र गोसहस्रफलं लभेत् ॥ ४६ ॥ सोमतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र सर्व्वपापैः प्रमुच्यते ॥ ४७॥ सोमग्रहे तु राजेन्द्र पापक्षयकरं भवेत् ॥ त्रैलोक्यविश्रुतं राजन्सोमतीर्थं महाफलम् ॥ ४८ ॥ यस्तु चान्द्रायणङ्कुर्य्यात्तत्र तीर्थे समाहितः ॥ सर्व्वपापविशुद्धात्मा सोमलोकं स गच्छति ॥ ४९ ॥ अग्निप्रवेशं यः कुर्य्यात्सोमतीर्थे नराधिप ॥ जले चानशनं वापि नासौ मर्त्यो हि जायते ॥ ० ॥स्तम्भतीर्थं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र सोमलोके महीयते ॥५१॥ ततो गच्छेत राजेन्द्र विष्णुतीर्थमनुत्तमम् ॥ योधीपुरमिति ख्यातं विष्णुस्थानमनुत्तमम् ॥ ५२ ॥ असुरा योधितास्तत्र वासुदेवेन कोटिशः ॥ तत्र तीर्थे समुत्पन्नं विष्णुश्रीको भवेदिह ॥ ५३ ॥ अहोरात्रोपवासेन ब्रह्महत्यां व्यपोहति ॥ नर्म्मदादक्षिणे कूले तीर्थं परमशोभनम् ॥ ५४ ॥ कामतीर्थमिति ख्यातं यत्र कामोऽर्चयद्धरिम् ॥ तस्मि स्तीर्थे नरः स्नात्वा उपवासपरायणः ॥ ५५ ॥ कुसुमायुधरूपेण रुद्रलोके महीयते ॥ ततो गच्छेत राजेन्द्र ब्रह्मतीर्थमनुत्तमम् ॥ ५६ ॥ उमा हकमिति ख्यातं तत्र सन्तर्पयेत्पितॄन् ॥ पौर्णमास्याममावास्यां श्राद्धङ्कुर्य्याद्यथाविधि ॥ ५७ ॥ गजरूपा शिला तत्र तोयमध्ये व्यवस्थिता ॥ तस्मिंस्तु दापयेत्पिण्डान्वैशाखे तु समाहितः ॥ ५८ ॥ स्नात्वा समाहितमना दम्भमात्सर्य्यवर्ज्जितः ॥ तृप्यन्ति पितरस्तस्य यावत्तिष्ठति मेदिनी ॥ ५९ ॥ विश्वेश्वरं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ स्नातमात्रो नरस्तत्र गाणपत्यपदं लभेत् ॥ ६० ॥ ततो गच्छेत राजेन्द लिङ्गो यत्र जना र्दनः ॥ तत्र स्नात्वा नरो भक्त्या विष्णुलोके महीयते ॥ ६१ ॥ यत्र नारायणो देवो मुनीनां भावितात्मनाम् ॥ स्वात्मानं दर्शयामास लिङ्गं तत्पः रमं पदम् ॥ ६२ ॥ अकोल्लन्तु ततो गच्छेत्सर्व्वपापविनाशनम् ॥ स्नानं दानञ्च तत्रैव ब्राह्मणानाञ्च भोजनम् ॥ ६३ ॥ पिण्डप्रदानञ्च कृतं प्रेत्या

---

१ द्विजाय काञ्चनं दद्यादिति पा० । २ कालमक्षयमिति पा० । ३ वरस्तत्र धियो भवेदिति, वरस्तत्र प्रियो भवेदिति पा० । ४ अयोध्यान्तु इति पा० । ५ शुम्भतीर्थमिति पा० । ६ योधनीपुरमाख्यातमिति, योधनापुरमाख्यातमिति पा० । ७ अमोघमिति विख्यातमिति पा० । ८ वैशाख्यान्तु विशेषतः पा० । ९ लिङ्गमस्यास्तीति लिङ्गः लिङ्गरूपीत्यर्थः । अर्शआदित्वादच् । लिङ्गे इति पा० ।

नन्तफलप्रदम् ॥ त्रियम्बकेन तोयेन यश्चरुं श्रपयेद्द्विजः ॥ ६४ ॥ अकोल्लमूले दद्याच्च पिण्डांश्चैव यथाविधि ॥ तारिताः पितरस्तेन तृप्यन्त्याच न्द्रतारकम् ॥ ६५ ॥ ततो गच्छेत राजेन्द्र तापसेश्वरमुत्तमम् ॥ तत्र स्नात्वा तु राजेन्द्र प्राप्नुयात्तपसः फलम् ॥ ६६ ॥ शुक्लतीर्थं ततो गच्छे त्सर्व्वपापविनाशनम् ॥ नास्ति तेन समन्तीर्थं नर्म्मदायां युधिष्ठिर ॥ ६७ ॥ दर्शनात्स्पर्शनात्तस्य स्नानाद्दानात्तपोजपात् ॥ होमाच्चैवोपवासाच्च शुक्लतीर्थे महत्फलम् ॥ ६८ ॥ योजनन्तत्स्मृतं क्षेत्रं देवगन्धर्व्वसेवितम् ॥ शुक्लतीर्थमिति ख्यातं सर्व्वपापविनाशनम् ॥ ६९ ॥ पादपाग्रेण दृष्टेन ब्रह्महत्यां व्यपोहति ॥ देव्या सह सदा भर्गस्तत्र तिष्ठति शङ्करः ॥ ७० ॥ कृष्णपक्षे चतुर्द्दश्यां वैशाखे मासि सुव्रत ॥ लोकात्स्वकाद्विनिष्क्रम्य तत्र सन्निहितो हरः ॥ ७१ ॥ देवदानवगन्धर्व्वाः सिद्धविद्याधरास्तथा ॥ गणाश्चाप्सरसो नागास्तत्र तिष्ठन्ति पुङ्गवाः ॥ ७२॥ रञ्जितं हि यथा वस्त्रं शुक्लं भवति वारिणा ॥ आजन्मजनितं पापं शुक्लतीर्थे व्यपोहति ॥ ७३ ॥ स्नानं दानं तपः श्राद्धमनन्तं तत्र दृश्यते ॥ शुक्लतीर्थात्परं तीर्थं न भविष्यति पावनम् ॥ ७४ ॥ पूर्व्वे वयसि कर्म्माणि कृत्वा पापानि मानवः ॥ अहोरात्रोपवासेन शुक्लतीर्थे[1] व्यपोहति ॥ ७५ ॥ कार्त्तिकस्य तु मासस्य कृष्णपक्षे चतुर्द्दशी ॥ घृतेन स्नापयेद्देवमुपोष्य परमेश्वरम् ॥ ७६ ॥ एकविंशत्कुलोपेतो न च्यवेदीश्वरालयात्[2] ॥ तपसा ब्रह्मचर्य्येण यज्ञैर्दानेन वा पुनः ॥ ७७ ॥ न ताङ्गतिमवाप्नोति शुक्लतीर्थे तु यां लभेत् ॥ शुक्लतीर्थं महातीर्थमृषिसिद्धनिषेवितम् ॥ ७८ ॥ तत्र स्नात्वा नरो राजन्पुनर्ज्जन्म न विन्दति[3] ॥ अयने वा चतुर्द्दश्यां संक्रान्तौ विषुवे तथा ॥ ७९ ॥ स्नात्वा तु सोपवासः सन्विजितात्मा[4] समाहितः ॥ दानं दद्या द्यथाशक्ति प्रीयेतां हरिशङ्करौ ॥ ८० ॥ एतत्तीर्थप्रभावेण सर्व्वं भवति चाक्षयम् ॥ अनाथं दुर्गतं विप्रं नाथवन्तमथापि वा ॥ ८१ ॥ उद्वाहयति यस्तीर्थे तस्य पुण्यफलं शृणु ॥ यावत्तद्रोमसंख्या तु तत्प्रसूतिकुलेषु च ॥ ८२ ॥ तावद्वर्षसहस्राणि रुद्रलोके महीयते ॥ ततो गच्छेत राजेन्द्र यमतीर्थमनुत्तमम् ॥ ८३ ॥ कृष्णपक्षे चतुर्द्दश्यां माघमासे युधिष्ठिर ॥ स्नानङ्कृत्वा नक्तभोजी न पश्येद्योनिसङ्कटम् ॥ ८४ ॥ ततो गच्छेत राजेन्द्र एरण्डीतीर्थमुत्तमम् ॥ संगमे तु नरः स्नात्वा उपवासपरायणः ॥ ८५ ॥ ब्राह्मणं भोजयेदेकं कोटिर्भवति भोजिताः ॥ एरण्डीसङ्गमे स्नात्वा भक्तिभावात्तु रञ्जितः ॥ ८६ ॥ मृत्तिकां शिरसि स्थाप्य[5] अवगाह्य च तज्जलम् ॥ नर्म्मदोदकसंमिश्रं मुच्यते सर्व्वकिल्बिषैः ॥ ८७ ॥ ततो गच्छेत राजेन्द्र तीर्थङ्कल्लोलकेश्वरम् ॥ गंगावतरते तत्र दिने[6] पुण्ये न संशयः ॥ ८८ ॥ तत्र स्नात्वा च पीत्वा च दत्वा चैव यथाविधि ॥

१ शुक्लतीर्थे इति पा० । २ च्यवेदीश्वरात्पदादिति पा० । ३ विद्यते इति पा० । ४ निर्जितात्मा इति पा० । ५ स्थापयित्वा इति साधु । ६ स्थाने इति पा० ।

सर्व्वपापविनिर्म्मुक्तो ब्रह्मलोके महीयते ॥ ८९ ॥ नन्दितीर्थं ततो गच्छेत्तत्र स्नानं समाचरेत् ॥ प्रीयते तत्र नन्दीशः सोमलोके महीयते ॥ ९० ॥
ततो गच्छेत राजेन्द्र तीर्थं त्वनरकं शुभम् ॥ तत्र स्नात्वा नरो राजन्नरकं नैव पश्यति ॥ ९१ ॥ तस्मिंस्तीर्थे तु राजेन्द्र स्वान्यस्थीनि विनिक्षिपेत् ॥
रूपवाञ्जायते लोके धनभोगसमन्वितः ॥ ९२ ॥ ततो गच्छेत राजेन्द्र कपिलातीर्थमुत्तमम् ॥ तत्र स्नात्वा नरो राजन्गोसहस्रफलं लभेत् ॥ ९३ ॥
ज्येष्ठमासे तु सम्प्राप्ते चतुर्द्दश्यां विशेषतः ॥ तत्रोपोष्य नरो भक्त्या दत्त्वा दीपं घृतेन तु ॥ ९४ ॥ घृतेन स्नापयेद्रुद्रं ततो वै श्रीफलं लभेत् ॥
घण्टाभरणसंयुक्तां कपिलां वै प्रदापयेत् ॥ ९५ ॥ सर्व्वाभरणसंयुक्तः सर्व्वदेवनमस्कृतः ॥ शिवतुल्यबलो भूत्वा शिववत्क्रीडते सदा ॥ ९६ ॥
अङ्गारकादिने प्राप्ते चतुर्थ्यान्तु विशेषतः ॥ स्नापयित्वा शिवं दद्याद्ब्राह्मणेभ्यस्तु भोजनम् ॥ ९७ ॥ सर्व्वदेवसमायुक्तो विमाने सर्व्वकामिके ॥
गत्वा शक्रस्य भवनं शक्रेण सह मोदते ॥ ९८ ॥ ततः स्वर्गात्परिभ्रष्टो धृतिमान्भोगवान्भवेत् ॥ अङ्गारकनवम्यान्तु अमावास्यां तथैव च ॥ ९९ ॥
स्नापयेत्तत्र यत्नेन रूपवान्सुभगो भवेत् ॥ ततो गच्छेत राजेन्द्र गणेश्वरमनुत्तमम् ॥११०॥ श्रावणे मासि सम्प्राप्ते कृष्णपक्षे चतुर्द्दशी ॥ स्नातमात्रो
नरस्तत्र रुद्रलोके महीयते ॥ १०१ ॥ पितॄणां तर्पणं कृत्वा मुच्यते स ऋणत्रयात् ॥ गङ्गेश्वरसमीपे तु गंगावदनमुत्तमम् ॥ १०२ ॥ अकामो वा
सकामो वा तत्र स्नात्वा तु मानवः ॥ आजन्मजार्नितैः पापैर्मुच्यते नात्र संशयः ॥ १०३ ॥ तस्य वै पश्चिमे भागे समीपे नातिदूरतः ॥ दशाश्वमे
धिकं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ १०४ ॥ उपोष्य रजनीमेकां मासि भाद्रपदे शुभे ॥ अमावास्यां हरं स्नाप्य पूजयेद्गोवृषध्वजम् ॥ १०५ ॥
काञ्चनेन विमानेन किङ्किणीजालमालिना ॥ गत्वा रुद्रपुरं रम्यं रुद्रेण सह मोदते ॥ १०६ ॥ सर्व्वत्र सर्व्वदिवसे स्नानं तत्र समाचरेत् ॥ पितॄणां
तर्पणं कृत्वा चाश्वमेधफलं लभेत् ॥ १०७ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे नर्म्मदामाहात्म्ये एकचत्वारिंशोऽध्यायः ॥ ४१ ॥ मार्कण्डेय
उवाच ॥ ततो गच्छेत राजेन्द्र भृगुतीर्थमनुत्तमम् ॥ तत्र देवो भृगुः पूर्व्वं रुद्रमाराधयत्पुरा ॥ १ ॥ दर्शनात्तस्य देवस्य सद्यः पापात्प्रमुच्यते ॥
एतत्क्षेत्रं सुविपुलं सर्व्वपापप्रणाशनम् ॥ २ ॥ तत्र स्नात्वा दिवं यान्ति ये मृतास्तेऽपुनर्भवाः ॥ उपानहौ तथा युग्मं देयमन्नञ्च काञ्चनम् ॥ ३ ॥

---

१ रुद्रलोके इति पा० । २ सघृतं श्रीफलं दहेदिति, सघृतं गुग्गुलं दहेदिति पा० । ३ सर्व्वपापविनिर्म्मुक्तः इति पा० । ४ सर्व्वभोगसमायुक्तः इति पा० । ५ स्नापयित्वा इति साधु । ६ अमावास्यां नरः स्नात्वा पूजयेद्वृषभध्वजमिति, स्नापयेद्वृषभध्वजमिति पा० । ७ यत्र देवं भृगुर्भर्गमिति, यत्र देवं भृगुः पूर्व्वमिति पा० ।

भोजनञ्च यथाशक्ति तस्याप्यक्षयमुच्यते[1] ॥ क्षरन्ति सर्व्वदानानि यज्ञदानं तपः क्रिया ॥ ४ ॥ अक्षय्यं तत्तपस्तप्तं[2] भृगुतीर्थे युधिष्ठिर ॥ तस्यैव तपसोग्रेण रुद्रेण त्रिपुरारिणा ॥ ५ ॥ सान्निध्यं तत्र कथितं भृगुतीर्थे युधिष्ठिर ॥ ततो गच्छेत राजेन्द्र गौतमश्वरमुत्तमम् ॥ ६ ॥ यत्राराध्य त्रिशूलांकं गौतमः सिद्धिमाप्तवान् ॥ तत्र स्नात्वा नरो राजन्नुपवासपरायणः ॥७॥ काञ्चनेन विमानेन ब्रह्मलोके महीयते ॥ वृषोत्सर्गं ततो गच्छेच्छाश्वतं पदमाप्नुयात्[3] ॥ ८ ॥ न जानन्ति नरा मूढा विष्णोर्मायाविमोहिताः ॥ धौतपापं ततो गच्छेद्धौतं यत्र वृषेण तु ॥ ९॥ नर्म्मदायां स्थितं राजन्सर्व्वपातकनाशनम् ॥ तत्र तीर्थे नरः स्नात्वा ब्रह्महत्यां व्यपोहति ॥१०॥ तत्र तीर्थे तु राजेन्द्र प्राणत्यागं करोति यः ॥ चतुर्भुजस्त्रिनेत्रश्च हरतुल्यबलो भवेत् ॥११॥ वसेत्कल्पायुतं साग्रं शिवतुल्यपराक्रमः ॥ कालेन महता जातः पृथिव्यामेकराड् भवेत् ॥१२॥ ततो गच्छेत राजेन्द्र हंसतीर्थमनुत्तमम्[4]॥ तत्र स्नात्वा नरो राजन्ब्रह्मलोके महीयते[5] ॥ १३ ॥ ततो गच्छेत राजेन्द्र यत्र सिद्धो जनार्दनः ॥ वराहतीर्थमाख्यातं विष्णुलोकगतिप्रदम् ॥ १४ ॥ ततो गच्छेत राजेन्द्र चन्द्रतीर्थमनुत्तमम् ॥ पौर्णमास्यां विशेषेण स्नानन्तत्र समाचरेत् ॥ १५ ॥ स्नातमात्रो नरस्तत्र पृथिव्यामेकराड् भवेत् ॥ देवतीर्थं ततो गच्छेत्सर्वतीर्थनमस्कृतम् ॥ १६ ॥ तत्र स्नात्वा च राजेन्द्र दैवतैः सह मोदते ॥ ततो गच्छेत राजेन्द्र शङ्खितीर्थमनुत्तमम् ॥ १७ ॥ यत्तत्र दीयते दानं सर्व्वं कोटिगुणं भवेत् ॥ ततो गच्छेत राजेन्द्र तीर्थं पैतामहं शुभम्[7] ॥ १८ ॥ यत्तत्र दीयते श्राद्धं सर्व्वं तस्याक्षयं भवेत्[6] ॥ सावित्रीतीर्थमासाद्य यस्तु प्राणान्परित्यजेत् ॥ १९ ॥ विधूय सर्व्वपापानि ब्रह्मलोके महीयते ॥ मनोहरन्तु तत्रैव तीर्थं परमशोभनम् ॥ २० ॥ तत्र स्नात्वा नरो राजन्नुद्रलोके महीयते ॥ ततो गच्छेत राजेन्द्र कन्यातीर्थमनुत्तमम् ॥ २१ ॥ स्नात्वा तत्र नरो राजन्सर्व्वपापैः प्रमुच्यते ॥ शुक्लपक्षे तृतीयायां स्नानमात्रं समाचरेत् ॥ २२ ॥ स्नातमात्रो नरस्तत्र पृथिव्यामेकराड् भवेत् ॥ स्वर्गबिन्दुं ततो गच्छेत्तीर्थं देवनमस्कृतम् ॥ २३ ॥ तत्र स्नात्वा नरो राजन्दुर्गतिं वै न पश्यति ॥ अप्सरेशं ततो गच्छेत्स्नानं तत्र समाचरेत् ॥ २४ ॥ क्रीडते नाकलोकस्थो ह्यप्सरोभिः स मोदते ॥ ततो गच्छेत राजेन्द्र भारभूतिमनुत्तमम्[8] ॥ २५ ॥ उपोषितो यजेतेशं[9] रुद्रलोके महीयते ॥ अस्मिंस्तीर्थे मृतो राजन्गाणपत्यमवाप्नुयात् ॥ २६ ॥

---

१ तदस्याक्षयमुच्यते इति पा० । २ न क्षरेयत्तपस्तप्तमिति पा० । ३ शाश्वतींगतिमाप्नुयादिति पा० । ४ हंसतीर्थमनुत्तमामिति पा० । ५ चन्द्रलोके महीयते इति पा० । ६ तत्तदस्याक्षयं भवेदिति पा० । ७ पैतामहं शुभमिति पा० । ८ भारभूतिमनुत्तममिति पा० । ९ उपोषितोऽर्चयिल्वेशमिति पा० ।

कार्त्तिके मासि देवेशमर्च्चयेत्पार्व्वतीपतिम् ॥ अश्वमेधाद्दशगुणं प्रवदन्ति मनीषिणः ॥ २७ ॥ वृषभं यः प्रयच्छेत तत्र कुन्देन्दुसप्रभम् ॥ वृषयुक्तेन यानेन रुद्रलोकं स गच्छति ॥ २८ ॥ एतत्तीर्थं समासाद्य यस्तु प्राणान् परित्यजेत् ॥ सर्व्वपापविनिर्मुक्तो रुद्रलोकं स गच्छति ॥ २९ ॥ जलप्रवेशं यः कुर्य्यात्तस्मिंस्तीर्थे नराधिप ॥ हंसयुक्तेन यानेन स्वर्गलोकं स गच्छति ॥ ३० ॥ एरण्ड्या नर्म्मदायास्तु सङ्गमं लोकविश्रुतम् ॥ तच्च तीर्थं महापुण्यं सर्व्वपापप्रणाशनम् ॥ ३१ ॥ उपवासकृतो भूत्वा नित्यं व्रतपरायणः ॥ तत्र स्नात्वा तु राजेन्द्र मुच्यते ब्रह्महत्यया ॥ ३२ ॥ ततो गच्छेत राजेन्द्र नर्म्मदोदधिसङ्गमम् ॥ जमदग्निमिति ख्यातं सिद्धो यत्र जनार्द्दनः ॥ ३३ ॥ तत्र स्नात्वा नरो राजन्नर्म्मदोदधिसंगमे ॥ त्रिगुणश्चाश्वमेधस्य फलम्प्राप्नोति मानवः ॥ ३४ ॥ ततो गच्छेत राजेन्द्र पिंगलेश्वरमुत्तमम् ॥ तत्र स्नात्वा नरो राजन्ब्रह्मलोके महीयते ॥ ३५ ॥ तत्रोपवासं यः कृत्वा पश्येत विमलेश्वरम् ॥ सप्तजन्मकृतं पापं हित्वा याति शिवालयम् ॥ ३६ ॥ ततो गच्छेत राजेन्द्र अलितीर्थमनुत्तमम् ॥ उपोष्य रजनीमेकां नियतो नियताशनः॥३७॥ अस्य तीर्थस्य माहात्म्यान्मुच्यते ब्रह्महत्यया ॥ एतानि तव संक्षेपात्प्राधान्यात्कथितानि च॥३८॥ न शक्या विस्तराद्वक्तुं संख्या तीर्थेषु पाण्डव ॥ एषा पवित्रा विपुला नदी त्रैलोक्यविश्रुता ॥३९॥ नर्म्मदा सरितां श्रेष्ठा महादेवस्य वल्लभा ॥ मनसा संस्मरेद्यस्तु नर्म्मदां वै युधिष्ठिर ॥ ४० ॥ चान्द्रायणशतं साग्रं लभते नात्र संशयः ॥ अश्रद्दधानाः पुरुषा नास्तिक्यं घोरमाश्रिताः ॥४१॥ पतन्ति नरके घोर इत्याह परमेश्वरः ॥ नर्म्मदां सेवते नित्यं स्वयं देवो महेश्वरः ॥ तेन पुण्या नदी ज्ञेया ब्रह्महत्यापहारिणी ॥ ४२ ॥ इति श्रीकूर्म्मपुराणे उत्तरार्द्धे नर्म्मदामाहात्म्ये द्विचत्वारिंशोऽध्यायः॥४२॥सूत उवाच ॥ इदं त्रैलोक्यविख्यातं तीर्थं नैमिषमुत्तमम् ॥ महादेवप्रियतरं महापातकनाशनम् ॥ १ ॥ महादेवं दिदृक्षूणामृषीणां परमेष्ठिना ॥ ब्रह्मणा निर्म्मितं स्थानं तपस्तप्तुं द्विजोत्तमाः ॥ २ ॥ मरीचयोऽत्र ये विप्रा वसिष्ठाः क्रतवस्तथा ॥ भृगवोऽङ्गिरसः पूर्व्वं ब्रह्माणं कमलोद्भवम् ॥ ३ ॥ समेत्य सर्व्ववरदं चतुर्म्मूर्त्तिं चतुर्म्मुखम् ॥ पृच्छन्ति प्रणिपत्यैनं विश्वकर्म्माणमव्ययम् ॥ ४ ॥ ॥ षट्कुलीया ऊचुः ॥ भगवन्देवमीशानं तमेवैकं कपर्दिनम् ॥ केनोपायेन पश्यामो ब्रूहि देव नमस्तव ॥५॥ ब्रह्मोवाच ॥ सत्रं सहस्रमासध्वं वाङ्म

१ सन्निभमिति, सुप्रभमिति पा० । २ सर्व्वपापविशुद्धात्मा इति पा० । ३ विमलेश्वरमुत्तममिति पा० । ४ रुद्रलोके इति पा० । ५ अलिकातीर्थमुत्तममिति, अलकातीर्थमुत्तमामिति पा० । ६ जीवंवर्षशतमिति पा० । ७ पुरा देवमिति पा० । ८ मारीचयोऽथ ये विप्रा इति पा० । ९ वासिष्ठा ध्रुवतस्तथा इति पा० । १० विश्वकर्म्माणमच्युतमिति पा०।

नोदोपवर्जिताः ॥ देशञ्च वः प्रवक्ष्यामि यस्मिन्देशे चरिष्यथ ॥ ६ ॥ मुक्त्वा मनोमयं चक्रं संस्पृष्ट्वा तानुवाच ह ॥ क्षिप्तमेतन्मया चक्रमनुव्रजतं मा चिरम् ॥ ७ ॥ यत्रास्य नेमिः शीर्य्येत स देशस्तपसः शुभः ॥ ततो मुमोच तच्चक्रं ते च तत्समनुव्रजन् ॥८॥ तस्य वै व्रजतः क्षिप्रं यत्र नेमिरशीर्य्यत ॥ नैमिषं तत् स्मृतं नाम्ना पुण्यं सर्व्वत्र पूजितम् ॥ ९ ॥ सिद्धचारणसम्पूर्णं यक्षगन्धर्व्वसेवितम् ॥ स्थानं भगवतः शम्भोरेतन्नैमिषमुत्तमम् ॥ ॥ १० ॥ अत्र देवाः सगन्धर्व्वाः सयक्षोरगराक्षसाः ॥ तपस्तप्त्वा पुरा देवा लेभिरे प्रवरान्वरान् ॥ ११ ॥ इमं देशं समाश्रित्य षट्कुलीयाः समाहिताः ॥ सत्रेणाराध्य देवेशं दृष्टवन्तो महेश्वरम् ॥ १२ ॥ अन्नदानं तपस्तप्तं श्राद्धयागादिकञ्च यत् ॥ एकैकं नाशयेत्पापं सप्तजन्मकृतं तथा ॥१३॥ अत्र पूर्व्वं स भगवानृषीणां सत्रमासताम् ॥ स वै प्रोवाच ब्रह्माण्डं पुराणं ब्रह्मभावितम् ॥१४॥ अत्र देवो महादेवो रुद्राण्या किल विश्वदृक् ॥ रमतेऽद्यापि भगवान्प्रमथैः परिवारितः ॥ १५ ॥ अत्र प्राणान् परित्यज्य नियमेन द्विजातयः ॥ ब्रह्मलोकं गमिष्यन्ति यत्र गत्वा न जायते ॥ १६ ॥ अन्यच्च तीर्थप्रवरं जाप्येश्वरमितिश्रुतम् ॥ जजाप रुद्रमनिशं यत्र नन्दी महागणः ॥ १७ ॥ प्रीतस्तस्य महादेवो देव्या सह पिनाकधृक् ॥ ददावात्मसमानत्वं मृत्युवञ्चनमेव च ॥ १८ ॥ अभूदृषिः स धर्म्मात्मा शिलादो नाम धर्म्मवित् ॥ आराधयन्महादेवं प्रसादार्थं वृषध्वजम् ॥ १९ ॥ तस्य वर्षसहस्रान्ते तप्यमानस्य विश्वधृक् ॥ शर्व्वः सोमो गणवृतो वरदोऽस्मीत्यभाषत ॥ २० ॥ स वव्रे वरमीशानं वरेण्यं गिरिजापतिम् ॥ अयोनिजं मृत्युहीनं याचे पुत्रं त्वया समम् ॥ २१ ॥ तथास्त्वित्याह भगवान्देव्या सह महेश्वरः ॥ पश्यतस्तस्य विप्रर्षेरन्तर्द्धानं गतो हरः ॥ २२ ॥ ततो युयोज तां भूमिं शिलादो धर्म्मवित्तमः ॥ चकर्ष लांगलेनोर्व्वीं भित्वादृश्यत शोभनः ॥ २३ ॥ संवर्त्तकोऽनलप्रख्यः कुमारः प्रहसन्निव ॥ रूपलावण्यसम्पन्नस्तेजसा भासयन्दिशः ॥ २४ ॥ कुमारतुल्योऽप्रतिमो मेघगम्भीरया गिरा ॥ शिलादं तात तातेति प्राह नन्दी पुनः पुनः ॥ २५ ॥ तं दृष्ट्वा नन्दनं जातं शिलादः परिपस्वजे ॥ मुनीनां दर्शयामास तत्राश्रमनिवासिनाम् ॥ २६ ॥ जातकर्म्मादिकाः सर्व्वाः क्रियास्तस्य चकार ह ॥ उपनीय यथाशास्त्रं वेदमध्यापयत् स्वयम् ॥ २७ ॥ अधीतवेदो भगवान्नन्दी मतिमनु

---

१ संस्पृश्य इति साधु । २ स देशः पुरुषर्षभाः इति पा० । ३ श्राद्धं जप्यादिकमिति पा० । ४ जप्येश्वरमनुत्तममिति पा० । ५ पुत्रार्थं वृषभध्वजमिति पा० । ६ ये तदाश्रयवासिनः इति पा० । ७ सुतमिति पा० ।

